परा सूक्ष्मा तथा स्थूला त्रिविधैका प्रकीर्त्तिता ।
तथा परा च पश्यन्ती मध्यमा वैखरी स्मृता ॥३७५॥
उल्लिलसिषयाऽयुक्ता परायां त्रिपुराभिधा ।
सन्निविष्टा परा शान्ताऽपीच्छाज्ञानक्रियात्मिका ॥३७६॥
अनुत्तरस्वरूपैव निराकाङ्क्षा तु या परा ।
ज्ञानशक्त्युन्मुखा सैव पश्यन्ती परिभण्यते ॥३७७॥
स्थितौ तस्याः क्रियाशक्त्यौन्मुख्ये सैवास्ति मध्यमा ।
पुनस्तत्रैव तस्या या स्थितिः सैवास्ति वैखरी ॥३७८॥
अघोरशक्तिः पश्यन्ती घोराघोरा तु मध्यमा ।
वैखरी घोरशक्तिः स्यादिच्छाज्ञानक्रियात्मिका ॥३७९॥
धरण्यन्तमविकल्पसंविन्मात्रतया यया ।
राजते परमेशोऽपि बिभ्रन् पश्यन् विभासयन् ॥३८०॥
सा परा परमेशस्य शक्तिः स्वात्माविभेदिनी ।
भैरवाख्यस्य कालस्य भासनात् कालकर्षिणी ॥३८१॥
यया तु भेदाभेदाभ्यां दर्पणे नगरादिवत् ॥३८२॥
राजते शिवशक्त्यात्मा सोच्यतेऽस्य परापरा ॥३८३॥
अपरा सा स्मृता शक्तिर्भेदेनैव यया प्रभुः ।
परस्परं विविक्तं तत् सर्वं बिभर्ति पश्यति ॥३८४॥

ग्रसते त्रितयश्चैतदनुसन्धानरूपया ।
यया प्रभुः पुनः सापि परैव कालकर्षिणी ॥३८५॥
परापरापराऽपराशक्तित्रयमयः प्रभुः ।
एक एव त्रिधा भाति दृष्टिस्मृतिविकल्पवान् ॥३८६॥
परा दृष्टिः समाख्याता स्मृतिश्चापि परापरा ।
विकल्पनाऽपरा ज्ञेयाप्येकैका त्रितयात्मिका ॥३८७॥

अहमात्मा परामर्शः परा वागुच्यते बुधैः ।
तस्याः परतरं रूपं पश्यन्त्यास्तु परं पुनः ॥३८८॥
अन्तारूपं त्यजन्तीव जिघृक्षन्तीव बाह्यताम् ।
परोल्लिलसिषा युक्ता पश्यन्ती प्रोच्यते बुधैः ॥३८९॥
तत्रोल्लिलसिषावत्यां वाच्यवाचकयोः क्रमः ।
नोदितो न च भेदस्य स्फुटतैव विभासिता ॥३९०॥
किन्तु चिज्ज्योतिषस्तत्र प्राधान्याद् द्रष्टृरूपता ।
इत्यन्वर्थतयैवेयं पश्यन्ती परिभण्यते ॥३९१॥
यत्रासूत्रितविभागो—वाच्यवाचकयोः क्रमः ।
स्फुटास्फुटात्मरूपत्वाद्—गृह्यते बुद्धिमात्रतः ॥३९२॥

दर्शनस्यैव प्राधान्यान्–मध्यभूर्द्रष्टृदृश्ययोः ।
मध्यान्म इत्यनुसृत्य मध्यमा सा बुधैः स्मृता ॥३९३॥
सूक्ष्मं तस्याः स्वरूपं तु वैखर्याः स्थूलमस्त्यतः ।
सैव वाक् स्थानकरणप्रयत्नादिबलात्पुनः ॥३९४॥
गृहीतवर्णरूपेयं विभागस्य स्फुटत्वतः ।
प्रधानत्वाच्च दृश्यस्य ग्राह्यत्वादिन्द्रियेण च ॥३९५॥
विखराख्ये शरीरे च भवत्वाद्वैखरी मता ।
अविज्ञाता त्वियं शक्तिर्बन्धिकैव पशोः सदा ॥३९६॥
स्वभावत्वेन विज्ञाता भोगमोक्षोभयप्रदा ।
योगिनो जायते सद्य इति स्पन्दे निरूपितम् ॥३९७॥
अतः परादितत्त्वज्ञो योगी चक्रेश्वरो भवन् ।
पूर्णाहन्तात्मनि स्पन्द–तत्त्वे रूढिमवाप्नुयात् ॥३९८॥

व्यापकस्वस्वरूपेऽस्मिन् परिच्छेदविवर्जिते ।
अनुत्तरविसर्गात्म- शिवशक्त्यद्वयात्मके ॥३९९॥
असम्भावितान्यापोह्ये शुद्धे स्वात्ममहेश्वरे ।
स्वात्ममात्रस्फुरत्तात्मा निर्विकल्पः स्वभावतः ॥४००॥

नित्योऽसाङ्केतिकः स्वच्छः परामर्शोऽहमित्ययम् ।
तं पराहं परामर्शं जानन् योगी सदा सुखी ॥४०१॥
अजानन् सकलो लोको मुह्यन् स्वस्यैव शक्तितः ।
परिच्छिन्ने विभिन्नेऽपि विकल्पेऽपोह्य-सत्त्वतः ॥४०२॥
इदमात्मनि शून्यादौ प्राणे बुद्धिप्रमातरि ।
देहे पुत्रे कलत्रे वाऽहं कुर्वन्नेति मूढ़ताम् ॥४०३॥
त्वं तु प्राज्ञः स्वतन्त्रोऽसि गुरुभक्तश्च जन्मतः ।
शास्त्रसेवी विवेकी सन् को मुह्येन्मूढ़वत् सुधीः ॥४०४॥
परप्रमातृतापन्नो विहर त्वं यथासुखम् ।
यदि चाप्यसि भोगार्थी भोगं भुङ्क्ष्व स्वशक्तिभिः ॥४०५॥
इच्छाशक्ति महेशानीं सर्वसम्पत्प्रदायिनीम् ।
अनुरक्तां सतीं हित्वा नोपैत्यन्यां महेश्वरः ॥४०६॥
महेश्वरो नोपकुरुते न चैवापकरोति सः ।
उपकारापकारौ च कुर्वन्नेव विराजते ॥४०७॥
इदमित्थं परिच्छिन्नं रूपं विश्वाकृतेर्नहि ।
विश्वरूपः सदासि त्वं किमन्यत् परिकाङ्क्षसे ॥४०८॥
परिमितप्रमातृत्वं त्यक्त्वा शुद्धाध्वसंश्रितः ।
अहमहमिदमिदमहमहमिदञ्चेति ॥४०९॥

शक्तिसदाशिवेश्वरविद्यातत्त्वस्वरूपज्ञः ।
शक्तिसदाशिवेश्वरविद्येश्वरत्वमागच्छ ॥४१०॥
सर्वाकारवियोगित्वं सर्वरूपत्वमेव च ।
पूर्णत्वमात्मनः सिद्धं स्वत एव सनातनम् ॥४११॥
तद्विस्मृत्य पुनः किञ्चित् पूर्णत्वं परिकल्प्य च ।
यततेऽहर्निशं प्राप्त्यै कीदृशीयं विडम्बना ॥४१२॥
स्वस्मिन् रतिः सर्वगुणाय कल्पते
साचापि स्वस्य स्मृतिरेव केवलम् ।
स्मृतौ स्वतन्त्रोऽस्ति समस्तलोक-
स्तथापि दुःखीति महद्विचित्रम् ॥४१३॥
शिवान्तेभ्यो धरादिभ्यः शुद्धाशुद्धाध्वरूपतः ।
परिच्छिन्नस्वभावेभ्यस्तत्त्वेभ्यः सर्वतो हि यत् ॥४१४॥
उत्तीर्णमपरिच्छिन्नसंविन्मात्रस्वरूपकम् ।
अनुत्तरं परं तत्त्वं परमार्थस्तदेव हि ॥४१५॥
वस्तुव्यवस्थास्थानं तद् विश्वस्यौजस्तदेव हि ।
विश्वं प्राणिति तेनैव तदेवाहमसंशयम् ॥४१६॥
अतोऽस्मि विश्वोत्तीर्णोऽहं विश्वात्माऽप्यहमेव च ।
इति सम्यग्विकल्पोयमुदितो हन्ति तत्क्षणात् ॥४१७॥

संसारहेतुभूतांस्तान् विकल्पान् प्रत्ययोद्भवान् ।
तन्मात्रगोचरान् सद्यो विषमेव विषं यथा ॥४१८॥

एक एवास्ति वा मूले द्वौ स्त इति विचिन्त्यते ।
अथवैकमपि नास्त्येव शून्यमेव विजृम्भते ॥४१९॥
सम्भवेतां तु द्वावेव सम्भवो नैकशून्ययोः ।
नहि शून्यादथैकस्मादुत्पत्तिर्दृश्यते क्वचित् ॥४२०॥
द्वाभ्यामेव समुत्पत्तिर्लोके सर्वस्य वस्तुनः ।
तथा सांख्येऽपि योगेऽपि द्वयोः सत्त्वं सदा मतम् ॥४२१॥
प्रकृतिः पुरुषोऽप्यस्ति जडश्चेतन एव च ।
स्त्री पुमान् दिनं रात्रिः सूर्यश्चापि कलाधरः ॥४२२॥
सत्यं किन्तु विचारस्य प्रयोजनं त्विदमेव हि ।
यद्यथा दृश्यते लोके तत्तथैवान्यथास्ति वा ॥४२३॥
विचाररहितो मूढः सदा शोकसमन्वितः ।
विचारवान् यथार्थज्ञो भवेच्छोकविवर्जितः ॥४२४॥
अतो विचार्यं निर्धार्य्यं तत्त्वं यच्चापि यादृशम् ।
यतोऽभिन्नेऽपि भेदोयं शक्तिशक्तिमतोरिव ॥४२५॥

निर्द्वन्द्वं तत्त्वमेकं यदशक्तमथ निष्क्रियम् ।
सत्यं तज्जगतो नैव कारणं भवितुं क्षमम् ॥४२६॥
किन्तु द्वाभ्यामशक्ताभ्यामपि नैव जनिर्भवेत् ।
भवेद् द्वयोश्च शक्तत्वे शक्तिरेव गरीयसी ॥४२७॥
न चैकस्याप्यशक्तत्वे द्वयोर्यत्रास्ति हेतुता ।
तत्रैकेन भवेत् कार्यं स्त्रैणे षण्ढोऽफलो यतः ॥४२८॥
इति द्वित्वं न वैकत्वं साधकं किन्तु साधिका ।
शक्तिरेका वर्त्तमाना ह्येकस्मिन् वा द्वयोस्त्रिषु ॥४२९॥
व्यज्यते शक्तिरेकेन क्वचिद् द्वाभ्यां त्रिभिः क्वचित् ।
क्वचिदेको न कुरुते द्वावप्येवं क्वचिन्नहि ॥४३०॥
एकेनैव तु बीजेन शक्तेन बहु व्यज्यते ।
बहुभिश्चाप्यशक्तैर्न जन्यते किञ्चिदण्वपि ॥४३१॥
एकस्यैवासहायस्य दृष्टा दिनमणेर्दिने ।
हेतुता नहि चन्द्रस्य भचक्रसहितस्य च ॥४३२॥
आकाशोऽप्यवकाशार्थमाश्रयार्थं च भूरपि ।
जलमप्यङ्कुराद्यर्थं बीजस्य सहकारि चेत् ॥४३३॥
द्वयोरप्यवकाशार्थमाश्रयार्थं तथात्मनोः ।
अस्त्यपेक्षा तृतीयस्य कार्यं यत्रापि सम्भवेत् ॥४३४॥

यत्र स्थित्वा च सम्मिल्य जनयेतामिमौ जनिम् ।
तादृशस्य तृतीयस्यासत्त्वे द्वौ न प्रसिद्ध्यतः ॥४३५॥
जनको जननी जन्यो भिन्न एव भवेद् यदि ।
तदा पुनर्विभिन्नस्य स्यादपेक्षाश्रयस्य च ॥४३६॥
जन्यस्य जनकौ यत्र व्यापकेऽव्यापिनावुभौ ।
तिष्ठतस्तत्र तिष्ठेच्चेद् द्वावप्येवं न सिद्ध्यतः ॥४३७॥
व्यापकं यमधिष्ठाय शक्तिमन्तमुभाविमौ ।
तिष्ठतः सृजतश्चापि सैकः स्रष्टोभयोरपि ॥४३८॥
निराश्रयौ पदार्थौ द्वाविति चेन्नहि सिध्यतः ।
गम्यमानौ दृश्यमानौ यौ पदार्थौ व्यवस्थितौ ॥४३९॥
तयोरप्याश्रयः कश्चिद् भिन्नयोरप्यभेदकः ।
सूर्याचन्द्रमसौ व्योम्नि दृश्येते न निराश्रयौ ॥४४०॥
शून्यमेव समाश्रित्य द्वावेव कुरुतो यदि ।
एक एव न किं कुर्यात् स्वस्मिन्नेव स्वशक्तितः ॥४४१॥
किञ्च शून्यमसद्रूपं तुच्छं तत्तु—कथं भवेत् ।
आधारः कारको धर्त्ता जगतो बीजयोर्द्वयोः ॥४४२॥
द्वावपीमौ च कुर्वाणौ सम्मिल्यैकत्वमागतौ ।
एकमेवैकसदृशं कुर्वाते न पृथक् पृथक् ॥४४३॥

यदि स्यातां पृथग् भिन्नाविमौ द्वावपि तत्त्वतः ।
कुर्यातां पृथगेवेमौ स्वतन्त्रौ स्वोयशक्तितः ॥४४४॥
एक एव द्विरूपेण भासेऽहं द्वावतो नहि ।
इति सन्दर्शनायैव द्वावेकोऽपि पुनः पुनः ॥४४५॥
एकस्मिन्नेव बीजे तु मूलमध्याग्रभासिका ।
अस्ति शक्तिर्भासयन्ती पत्रपुष्पफलान्यपि ॥४४६॥
एकस्मिन्नपि बीजे द्वे तत्त्वे चेत्समवस्थिते ।
सत्यं बीजं न शून्यं स्यात् स्याद् बीजं त्वादिकारणम ॥४४७॥
अनुत्तरं परं बीजं शिवशक्तिसमन्वितम् ।
एकमेवाद्वयं, बिन्दु--विसर्गाविव संस्थितम् ॥४४८॥
उभे एव समुद्रस्य स्वस्वरूपे स्वभावतः ।
परस्पराश्रिते चेमे सोर्मिताशान्तते किल ॥४४९॥

बीजेन व्यज्यते योनिः स्वतन्त्रा नैव विद्यते ।
बीजसंलग्नतैवास्या योनित्वं परिभण्यते ॥४५०॥
नहि बीजं विना योनि-र्बीजं योनित्वमागतम् ।
यतो योनिरभिव्यक्ता बीजस्यैव परं वपुः ॥४५१॥

प्रसरन्ती पुनः सापि बीजप्रसवकारिणी ।
तथापि योनिर्बीजस्य बीजं भवितुमक्षमा ॥४५२॥
योनौ बीजं नवीभूय पुनरुद्गच्छतीत्यपि ।
सदेव योनौ प्रच्छन्नं स्वरूपमनुगच्छति ॥४५३॥
योनिर्बीजात् पृथग्भूता स्वतन्त्रा नैव दृश्यते ।
आविर्भूतं पुनर्योनौ बीजं तस्याः पृथक् स्थितम् ॥४५४॥
अन्योन्याश्रयताऽनादिर्यापि बीजाङ्कुरादिषु ।
स्वीकृता विदुषा क्वापि सापि नास्त्येव तत्त्वतः ॥४५५॥
क्षेत्रादुत्पाट्यते बाल्ये क्षेत्रोत्पन्नं तृणादिकम् ।
तथापि बीजनित्यत्वात् क्षेत्रेऽद्यापि तृणादिकम् ॥४५६॥
यद्यङ्कुरं विना न स्याद् बीजसत्त्वं तदा पुनः ।
लतागुल्मादिके नष्टेऽ पुष्पितेऽ फलिते सति ॥४५७॥
न प्ररोहेत् पुनः क्षेत्रे लतागुल्मादिकं ननु ।
अतो बीजमयी पृथ्वी शक्तिर्बीजस्य वारिणः ॥४५८॥
अस्तीति प्रतिपत्तव्यं तस्या बीजाङ्कुरादिकम् ।
यथा पृथ्व्याः समुत्पन्नं सर्वं वस्तु मृदात्मकम् ॥४५९॥
तथा शक्तिमतो जातं सर्वं शक्त्यात्मकं जगत् ।
अतः पृथ्वी जलस्यैवं जलं वह्नेर्विभावसुः ॥४६०॥

वायोः स नभसश्शक्तिर्नभश्चापि क्रमात् पुनः ।
शक्तिः सदात्मनो ज्ञेया शक्तिमान् स शिवः परः ॥४६१॥
चिद्रूपाऽऽह्लादसरसोऽ नन्तशक्तिसुनिर्भरः ।
शक्त्या स्वस्मिन् स्वयं देवः क्रमादक्रमतोऽपि सः ॥४६२॥
योगीव निरुपादानं विश्वमाभासयत्यपि ।
प्रमातर्येव वस्तूनां सत्ता नान्यत्र भासते ॥४६३॥
इदम्मे प्रतिभातीत्थमतो वस्त्विदमीदृशम् ।
एवं हि मन्यते सर्वस्तस्मात् सर्वस्य वस्तुनः ॥४६४॥
आधारः प्रथमः सिद्धः स्वमहं संविदाश्रयः ।
अस्त्वेषाऽत्र समावेशकथा प्रकृतमुच्यते ॥४६५॥
अतो बीजस्य जननेऽपेक्षते स्वं जलात्मकम् ।
बीजं पृथ्वी, तदुत्पन्नबीजं वार्यङ्कुरस्य च ॥४६६॥
यदा ग्रीष्मे स्वबीजेन तेजसाऽऽकृष्यते जलम् ।
तदा सृष्ट्यात्मिका शक्तिः पृथ्वीस्थापि निवर्तते ॥४६७॥
इत्युन्मेषनिमेषात्मशक्तिमाञ्छिव एककः ।
प्रकाशात्मा विमर्शात्मा भैरवो भैरवीयुतः ॥४६८॥
कलया कलयन्नेवं याति विश्वात्मतां प्रभुः ।
स्वस्वभावममुं वेत्ति सिक्तो यस्तु कृपाऽमृतैः ॥४६९॥

बीजात्मार्थप्रकाशोऽयं विमर्शात्मास्ति वागियम् ।
अज्ञातशक्तिः पश्चात्मा शक्तिं जानन् स्वयं प्रभुः ॥४७०॥
भवतीति विनिश्चित्य शक्तिं स्वां पश्य सर्वतः ।
वायौ विलीनतां याते दीपोऽग्निर्याति लीनताम् ॥४७१॥
प्रलये प्रलयाग्निश्च देवोऽयं भास्करस्तथा ।
प्राणे प्रलीनतां प्राप्ते देहेऽग्निर्नैव तिष्ठति ॥४७२॥
वह्निनामा प्रमातापि लीयते किं न दृश्यते ।
प्रलयानल ! नास्त्येव दाह्यं किञ्चित्तवाऽधुना ॥४७३॥
स्वात्मसाच्च कृतं विश्वं शान्तिं स्वान्तेनुभूयताम् ।
समावेशकथैवेयं . वारितापि पुनः पुनः ॥४७४॥
मुख्यत्वात् पुनरायाता प्रकृतं वच्मि साम्प्रतम् ।
अथवा प्रकृतैवैषा मुख्यार्थाभ्यासशालिनः ॥४७५॥

स्वतन्त्रो बीजमित्युक्तं स्वातन्त्र्यं योनिरुच्यते ।
शक्तिर्योनिः समाख्याता शिवो बीजपदाभिधः ॥४७६॥
नहि बिन्दुः शिवो देवोऽप्राप्य शक्त्यादिरूपताम् ।
स्वतन्त्रः शक्तिविकल उच्चार्येतापि केनचित् ॥४७७॥

अतएव कुलेश्वर्या सहितो हि कुलेश्वरः ।
शक्त्या प्रकाश्यमानोऽयम् अं अ इत्यत्र दृश्यते ॥४७८॥
बिन्दुबीजात्प्रसरतो हकारार्धार्धरूपिणः ।
विसर्गस्याप्यभिव्यक्तिः केवलस्य न जायते ॥४७९॥
अव्यक्ताच्च महाबिन्दोर्जातस्यास्य स्वरस्य वै ।
शक्त्यात्मकार्णवर्गस्य बीजात्मत्वमपि स्थितम् ॥४८०॥
बिन्द्वात्मकात्समुद्भूत—बीजरूपस्वरस्य वै ।
अकारादेरभिव्यक्तिः स्वतन्त्रस्यैव दृश्यते ॥४८१॥
बीजं स्वरः स्वतन्त्रोऽयं कादिर्योनिस्तथा न हि ।
नाचं विना व्यञ्जनस्योच्चारणमपि सम्भवेत् ॥४८२॥
भवत्युच्चारणं किन्तु केवलाचो हलं विना ।
स्वातन्त्र्यं निरपेक्षं तु संविदः केवलं परम् ॥४८३॥
आपेक्षिकं स्वरादौ तत् स्यादन्यत्रापि मायिके ।
मध्यस्थाः सर्वं एवातो बीजयोन्यात्मका मताः ॥४८४॥
अकारादिः ककारादेर्बीजं तेन विना न हि ।
ककारादिरतः सत्तां लभते कामपि स्वकाम् ॥४८५॥
तथैवायमकारादिर्वेतृबिन्दुं विना न हि ।
तत्समाविष्ट एवातो लभते स्वप्रकाशनम् ॥४८६॥

अकारादिविसर्गान्ते शक्तित्वमत एव हि ।
परापरस्वरूपत्वं बीजत्वमपि युज्यते ॥४८७॥

अन्तः प्रमात्रैकात्म्येन विद्यते विसिसृक्षुता ।
सा पुनर्बहिरौन्मुख्याद् याति क्षोभाद् विसर्गताम् ॥४८८॥
स्वयमेव स्वयं संवित् क्षुभ्यति क्षोभयत्यपि ।
क्षोभश्च क्षोभणा चैव द्वयं संविदि वर्त्तते ॥४८९॥
यथेच्छन्क्षोभयँल्लोकः स्वाभिन्नां स्वात्मनि स्थिताम् ।
विद्यां विभिन्नंविषयां स्वीयां कामकलामिव ॥४९०॥
द्राक् प्रवक्ता कविर्वापि गायको लोकमोहकः ।
दर्शको नर्तको भोगी कामी चापि भवत्यसौ ॥४९१॥
तथा क्षुभ्यच्छिवः स्वस्मिन् शक्ति स्वां क्षोभयत्यपि ।
अक्षुब्धः क्षुब्धतामेति स्वाभिन्नां भेदयन्निव ॥४९२॥
इह क्षोभः समाख्यातः संविन्निष्ठैव ज्ञेयता ।
क्षोभणापि च सैवास्ति ततो येयं बहिष्कृतिः ॥४९३॥
अन्तःस्थितस्य विश्वस्य बीजांशस्य सिसृक्षुता ।
क्षोभोऽनिच्छे यदिच्छाया भासनं क्षोभणा च तत् ॥४९४॥

येनेदन्ताविमृश्येन प्राणदेहादिवस्तुना ।
ह्लादिनैकात्म्यमासाद्य कृतिनीच्छा भवत्यपि ॥४९५॥
स क्षोभाधार इत्युक्तो मायेदन्ताविभासिका ।
शक्तिः सा शिवजातत्वाच्छिवजाया प्रकीर्त्तिता ॥४९६॥
शिवादिक्षितिपर्यन्तनिमेषोन्मेषशालिनी ।
अच्छैवेच्छा भगवतो विश्ववैभवशालिनी ॥४९७॥
संहर्तृत्वात्तु याऽवस्था प्राक्सृष्टस्य निमेषभूः ।
उन्मेषभूः स्रष्टृरूपा सैवेयं तु भविष्यतः ॥४९८॥
चिद्घनोन्मेषसारा या प्रभोर्विश्वनिमेषभूः ।
विश्वोन्मेषस्वरूपा सा चिद्घनत्वनिमेषभूः ॥४९९॥
प्रलयोऽभ्युदयो यस्या उदयः प्रलयस्तथा ।
निमेषोन्मेषवाच्येयमेकैवास्त्युभयात्मिका ॥५००॥
विश्वरूपनिमेषात्मकार्योन्मेषविधायिनी ।
चिद्रूपोन्मेषरूपैव बाह्यताप्रतिरोधिनी ॥५०१॥
सृष्टिं प्रलयरूपाञ्च प्रलयं सृष्टिरूपिणम् ।
एकयैवानया शक्त्या निमेषोन्मेषसंज्ञया ॥५०२॥
अकुर्वन्नपि कुर्वाणः शक्त्या स्वातन्त्र्यसंज्ञया ।
नित्यं विराजते स्वच्छो नर्तको नटराजराट् ॥५०३॥

सदाशिवादिभूम्यन्तविश्वरूपप्रकाशने ।
परप्रमातृविश्रान्तिरूपसंहारकर्मणि ॥५०४॥
परा शक्तिर्भगवती प्रसरन्ती स्वरूपतः ।
चितिश्चेत्यात्मिका हेतुः स्वतन्त्राऽनुत्तरात्मिका ॥५०५॥
क्रियामूर्त्तिविहीनायाः क्रियावैचित्र्यभासनात् ।
संविदोऽस्त्येव कालाध्वा वर्णमन्त्रपदात्मकः ॥५०६॥
भाति देशक्रमो मूर्त्ति-वैचित्र्याभासतः पुनः ।
देशाध्वा प्रोच्यते सोऽत्र कलातत्त्वपुरान्वितः ॥५०७॥
आभाससत्त्वासत्त्वाभ्यां प्राणितः क्रम एव हि ।
काल इत्युच्यते लोके देशो मूर्त्तिविभेदतः ॥५०८॥
संवित्स्वभाव आत्मायं कालशक्तिसमन्वितः ।
यत आभासवैचित्र्य-निर्माणेऽयं स्वयं प्रभुः ॥५०९॥
स्वप्नसंकल्पसृष्ट्यादौ शक्तिः संविदितात्मनः ।
स्वेनैवास्तीत्यतः स्वात्मा शक्त्या भाति तथा तथा ॥५१०॥
शक्तिः शिवस्वभावैव न तु वस्त्वन्तरात्मिका ।
शिवो वा कथ्यतां शक्तिर्भेदो नास्त्येव वस्तुतः ॥५११॥
शक्तिः स्पन्दनशीलैव या बहिर्विषयोन्मुखा ।
व्यापिनीभावमापन्ना सा सृष्टिव्यपदेशभाक् ॥५१२॥

आत्मसात्कृतभावत्वात्प्रत्यावृत्य पराङ्मुखी ।
सैवोन्मनायमाना तु संहारो व्यपदिश्यते ॥५१३॥
अनुपाधि-भंजमाना विश्रामं धाम्नि शाम्भवे ।
पुनराद्यैव सा शक्तिरनाख्येत्यभिधीयते ॥५१४॥
भान्ति विच्छिद्य विच्छिद्य शून्यप्राणादयो यथा ।
देशकालक्रमौ भातस्तथा तेषां मितात्मनाम् ॥५१५॥
किन्त्वाप्तपूर्णभावस्य सकृद्भातामितस्य च ।
भावा अपि सदा भान्ति पूर्णाः स्वात्मेव स्वात्मनि ॥५१६॥
किञ्च विज्ञातृविज्ञेयभेदभानमिदं प्रभोः ।
निर्माणशक्तिरिच्छेयं ज्ञातृता कर्त्तृता तथा ॥५१७॥
सृष्टिर्यथा प्रमेयस्य न प्रमातारमन्तरा ।
तथैव न प्रमातुः सा स्यात्प्रमेयं विना क्वचित् ॥५१८॥
भेदद्रष्टा प्रमाताऽयं लभतां मेयमन्तरा ।
कथं स्वीयस्वरूपं तद् भेददृष्ट्येकजीवितम् ॥५१९॥
देशकालपरिच्छिन्नो-भवन्नेव स्वयं पुरा ।
अहमीदृश इत्येवं जानञ्जानाति चापरम् ॥५२०॥
मेयतां स्वस्य स्वेनैव स्वयं देव उपागतः ।
मिमीतेऽप्यपरं किञ्चि-न्नामेयो मातृतां वहेत् ॥५२१॥

परिच्छिन्नं परिच्छिन्दन् परिच्छेत्ता भवन् पशुः ।
कालातीतोऽपि कालेन ग्रस्तं स्वमनुमोदते ॥५२२॥
शून्ये प्राणेऽथवा बुद्धौ देहे वाहमिति स्फुरन् ।
परप्रमातृतां त्यक्त्वा परिच्छिन्नप्रमातृताम् ॥५२३॥
गृह्णञ्छून्यप्रमातेव प्राणमाता भवन्नपि ।
बुद्धिप्रमातृतापन्नो देह मातापि जायते ॥५२४॥
महाभूतात्मकं स्थूलं सूक्ष्मं पुर्यष्टकात्मकम् ।
समनान्तं परं प्रोक्तं शरीरं त्रिविधं बुधैः ॥५२५॥
पृथिव्यादिशिवान्ता याः तत्त्वरूपाः कलाः स्थिताः ।
लयभावनया तासां लयः स्वे स्वेच कारणे ॥५२६॥
अथवा स्वापसव्यस्य पादस्याङ्गुष्ठतः स्फुरन् ।
कालाग्नी रुद्ररूपोऽयं देहं भस्मीकरोत्यदः ॥५२७॥
चिन्तनं प्रोच्यते ध्वंसो महासृष्टिफलप्रदः ।
लयो दाहोऽथवा ध्वंसः शास्त्रेऽभिन्नार्थवाचकः ॥५२८॥
निर्दिष्टोऽस्ति तथैवात्र मन्त्रोऽस्मिध्वंसको मतः ।
तत्तद्वर्णात्मकत्विड्भिर्विमर्शोत्थैर्दहत्ययम् ॥५२९॥
दाहो मन्त्राग्निना चापि देहे पुर्यष्टकेऽपि वा ।
देहपुर्यष्टकाहन्ताविध्वंसादेव जायते ॥५३०॥

देहसत्त्वेऽपि देहो नाऽहन्ता तत्र नचेद् भवेत् ।
अहन्तानास्पदत्वाच्च देहो दग्ध इतिस्मृतः ॥५३१॥
देहसंस्कारभस्मापि पुनरुत्सृज्यसत्त्वरम् ।
निस्तरङ्गे ध्रुवे धाम्नि तिष्ठेच्छुद्धचिदात्मनि ॥५३२॥
संविदः सृष्टिधर्मत्वात् पुनरस्ति तरङ्गिता ।
या मूर्त्तिर्भैरवोच्छायो वाऽहमित्यपि कथ्यते ॥५३३॥
मालिनीविजये प्रोक्ता धारणानेकधा यतः ।
अतः साऽप्युच्यते काचित्कामदा मितयोगिनाम् ॥५३४॥
वायवो धारणाङ्गुष्ठे तैजसी नाभिमध्यगा ।
माहेयी कण्ठदेशे तु वारुणी घण्टिकाश्रिता ॥५३५॥
आकाशधारणा मूर्ध्नि सर्वसिद्धिफला स्मृता ।
प्रथमं पार्थिवीं कण्ठे धारणां सम्प्रधार्य च ॥५३६॥
उद्घातपञ्चकेनैव हृदयादुत्थितेन च ।
भिन्द्यात्पञ्चगुणं तत्त्वं भूरूपं प्रथमं ततः ॥५३७॥
क्रमेणानेन हृदया- देवोद्घातैश्चतुर्विधैः ।
एकद्वित्रिचतुःसंख्यैर्भिन्द्यात्तत्त्वं गुणानुगैः ॥५३८॥
चतुर्गुणान्वितापत्वं घण्टिकास्थं विभेदयेत् ।
अग्नितत्त्वं स्थितं नाभौ भिन्द्याद् गुणत्रयान्वितम् ॥५३९॥

पादाङ्गुष्ठगतं वायुं शब्दस्पर्शगुणान्वितम् ।
भित्त्वा पुनः स्थिरप्रज्ञो व्योमग्रन्थि विभेदयेत् ॥५४०॥
संकोचयुक्तिविद्योगी व्योमग्रन्थिविभित्तये ।
अङ्गुष्ठादूर्ध्वमुद्बोध्य प्राणशक्तिमसंशयः ॥५४१॥
भिन्द्यादेकगुणं व्योम ब्रह्मरन्ध्रव्यवस्थितम् ।
अत्रापि हृदयादेवोद्घातेनैकेन सिद्धिभाक् ॥५४२॥
रोधितः प्राणं आगत्य तत्तत्स्थानं निवर्तते ।
स उद्घात इति ज्ञेयो योगिभिर्वायुमाश्रितः ॥५४३॥
केवलानुभवेनैव तत्तत्स्थानानुसारिणा ।
वायुना सहितो वापि द्विधोद्घातो भवेदयम् ॥५४४॥
षड्विधं यच्छिवस्योक्तं रूपं बिन्द्वादिना पुरा ।
योगिनामुपकाराय तत्किञ्चिद्व्यज्यतेऽधुना ॥५४५॥
अष्टौ बिन्द्वादयो बिन्दुं विना तत्सहिता नव ।
मंन्त्रशास्त्रे समाख्याता नादनाम्नैव योगिभिः ॥५४६॥
बिन्द्वर्धंचन्द्ररोधिन्यो नादनादान्तशक्तयः ।
व्यापिकासमनोन्मन्य इति नादपदाभिधाः ॥५४७॥
सूक्ष्मैः सूक्ष्मतरैः सूक्ष्मतमैः कालैरुपलक्षिताः ।
ध्वनयो वर्णविशेषा वानुस्वारविसर्गवत् ॥५४८॥

अमात्रमुन्मना शक्तिः कालस्तत्र न विद्यते ।
समनायां पुनः काल एकाणुर्लवसंज्ञकः ॥५४९॥
व्यापिकायामपि लवौ शक्तौ चत्वार एव च ।
नादान्तेऽष्टौ लवा, नादे षोडशैवलवाः पुनः ॥५५०॥
द्वात्रिंशदेव रोधिन्यां चन्द्रे तद्द्विगुणा लवाः ।
बिन्दौ लवाः शतं ज्ञेया अष्टाविंशतिसंयुतम् ॥५५१॥
नलिनीदलसंहत्याः सूक्ष्मसूच्याभिवेधने ।
दले दले तु यः कालः स कालो लवसंज्ञितः ॥५५२॥
अर्धमात्रस्तु भ्रूमध्येऽनुस्वारोच्चारसन्निभः ।
बिन्दुरुच्चार्यते तत्रावस्था सौषुप्तसन्निभा ॥५५३॥
अर्धचन्द्रा तु नादान्ते तुर्यावस्था विभाव्यते ।
नादान्तादुन्मनीव्याप्ता तुर्यातीता व्यवस्थिता ॥५५४॥
अर्धचन्द्रात्तु नादान्ते तुर्याभिव्यक्तिकारिका ।
नादस्य विद्यते वित्तिर्नादान्तादूर्ध्वमागते ॥५५५॥
आनन्दैकघनावस्था तुर्यातीतपदाभिधा ।
महाबिन्दुं समाश्रित्यावस्था कापि न सम्भवेत् ॥५५६॥
हृदयाधिपतिर्ब्रह्मा कण्ठस्वामी खगेश्वरः ।
रुद्रस्तु ताल्वधिपतिर्भ्रूमध्येश्वर ईश्वरः ॥५५७॥

विभेदिताखिलग्रन्थेर्योगिनो विषयोऽस्ति यत् ।
अथवा यस्य विज्ञानाद्भवेद्द्राग्योग्ययोग्यपि ॥५५८॥
तत्तत्त्वञ्च रहस्यञ्च मन्त्रयाम्यधुना मनोः ।
कलयन्तु भवन्तोऽपि स्वसंवित्परिभासितम् ॥५५९॥
वाचको यः परामर्शसारः शब्दविशेषकः ।
अमायीयोऽस्ति मायीयवर्णानुप्राणकृत् परः ॥५६०॥
तदात्मभावमापन्ना मन्त्राः शब्दशरीरकाः ।
अतः सङ्कुचिता वेद्यवर्गादन्योन्यतश्च ते ॥५६१॥
प्रकाशम्प्रति शब्दस्य यतोऽत्यन्तं न विद्यते ।
घनावरणरूपत्वमतः सर्वज्ञतायुजः ॥५६२॥
नित्यं विमर्शरूपेण हृदयाकाशसंस्थितः ।
मन्त्रोऽयं शब्दनाकारः स्वयं विपरिवर्तते ॥५६३॥
अतोऽनाहतशब्दस्य वाच्यत्वेन व्यवस्थितः ।
मन्त्रो नित्योदितः शुद्धः कथित अगमेष्वपि ॥५६४॥
स्वावमर्शपरैवेयं संविन्नादस्वरूपताम् ।
विमृशन्ती स्पृशन्तीव याति वर्णादिरूपताम् ॥५६५॥
तत्र स्पन्दोऽस्ति सर्वत्र स्फुरणात्मा व्यवस्थितः ।
सा शक्तिः परवागात्मा विद्या मन्त्रपदाभिधा ॥५६६॥

एकादशपदा प्रोक्ता वर्णबिन्द्वादिरूपिणी ।
ओंकारस्त्रिपदो ज्ञेयो बिन्दुश्चन्द्रो निरोधिनी ॥५६७॥
नादोनादान्तशक्तीच व्यापिनी समना तथा ।
प्राणनापरपर्यायो जीवः प्राणश्च यो मतः ॥५६८॥
सोऽप्येष नाद एवास्ति स्वप्रवृत्तो हलाकृतिः ।
यत आगमसिद्धान्त ईदृशोऽत्र व्यवस्थितः ॥५६९॥
पारमेशी च बोधाख्या शक्तिर्गर्भी कृताखिला ।
पराकुण्डलिकाभिख्या स्फुरन्त्याप्नोति सत्वरम् ॥५७०॥
विमर्शनेन नादात्मवर्णकुण्डलिकात्मताम् ।
निमज्जितैतद्रूपैति प्राणकुण्डलिकात्मताम् ॥५७१॥
अतो हलाकृतिशब्देन प्रसुप्तभुजगाकृतिः ।
कुण्डलिन्याकृतिर्ज्ञेया ध्येया शक्तिः सुयोगिभिः ॥५७२॥
अंत ऊर्ध्वमधश्चापि स्वरसेन वहन् सदा ।
प्राणो हानसमादानधर्मा हसविमर्शकः ॥५७३॥
त्यागोपादानधर्मत्वात्प्रोक्तं स्वच्छन्दशासने ।
आत्मा प्राणः शिवः सूर्यो हंस इत्यभिधीयते ॥५७४॥
नित्यप्रवृत्तो हंसस्योच्चारो नादात्मनो हि यः ।
स एव वर्णरूपोऽयं स्फुटोंकारस्वरूपवान् ॥५७५॥

अत्रानच्कहकारात्माऽकारो यः स शिरः स्मृतः।
उकारः संचरन्मध्ये चरणात्मा विभाव्यते ॥५७६॥
बिन्द्वाद्यासूत्रणात्मायं मस्त्यनुस्वारसन्निभः।
वेत्रनुभवतामाप्तं त्रयं बिन्दुरिदं भवेत् ॥५७७॥
पदन्तु यावदूर्ध्वोर्ध्वं मन्त्रोच्चारोऽधिगच्छति।
वाच्यवाचकयोस्तावत्स्थूलता विनिवर्तते ॥५७८॥
सूक्ष्मसूक्ष्मतराद्यात्मव्याप्तिर्मान्त्री प्रवर्तते।
पर्यन्ते परतत्त्वात्मोन्मनायां शान्तिमेत्यपि ॥५७९॥
हृदयादीरितः शब्दस्तालुस्थः पुनरीर्यते।
भ्रूमध्यमागतः पश्चाल्ललाटे सम्प्रवर्तते ॥५८०॥
तत्र सूक्ष्मस्वरूपत्वं हित्वाऽनुभवरूपताम्।
सम्प्राप्तो ज्ञानतामेति विधिरुच्चारणे त्वयम् ॥५८१॥
अविकल्पपरामर्शैक्याच्चाभिन्नेन रूपतः।
तथा मन्त्रकलाव्याप्त्या भिन्नेनापि स्वरूपतः ॥५८२॥
आन्तरोच्चारवन्मन्त्रं पश्यन्त्यात्मकमुच्चरेत्।
अवस्थात्रयसृष्ट्यादित्रयाधिष्ठात्रधिष्ठिताः ॥५८३॥
उच्चार्यन्ते त्रयो वर्णा ब्रह्मविष्णुहरार्थकाः।
किन्तूच्चारस्य बिन्दौ हि व्याप्तिर्नास्तीत्यतः पुनः ॥५८४॥

बिन्दावमीषां तादात्म्याध्यास उच्चार उच्यते ।
मन्त्रोच्चारः कृतो ह्येष योगिभिस्तत्क्षणादिव ॥५८५॥
अकारादिकृतो भेदो यश्च मात्राकृतोऽभवत् ।
सर्वः संपिण्डितः सोऽत्रैकत्वमाप्तोऽधुना यतः ॥५८६॥
अतः सामान्यवेद्यस्य वेदको वेदनात्मकः ।
बिन्दुर्भवन् स एवायं भ्रूमध्यमधितिष्ठति ॥५८७॥
प्रशाम्यद्वेद्यमुख्यत्वो ललाटं समुपागतः ।
अर्धचन्द्रोभवन् सोऽपि शान्तवेद्यत्वमागतः ॥५८८॥
रोधकत्वाच्च वेद्यानां योगिनामप्ययोगिनाम् ।
स्पष्टरेखाकृतौ स्वस्यां प्रवेशप्रतिरोधनात् ॥५८९॥
रोधिका कर्मनामाभ्यां भूत्वा प्राप्नोति नादताम् ।
प्राधान्यादवभासस्य वेद्यं संवेदनात्मकम् ॥५९०॥
संविदा भासितं भाति स्थूलसूक्ष्मपरात्मकम् ।
तत्र सूक्ष्मपराकाष्ठा भूमिरस्त्यर्द्धचन्द्रगा ॥५९१॥
अवभासस्य तत्रैव प्राधान्यं परिहाय च ।
विमर्शनं पुरस्कृत्य विश्रान्तिं याति शब्दने ॥५९२॥
सूक्ष्मप्राणपथेनैति नादनादान्तरूपताम् ।
ततः क्षीणे प्रवाहात्मवायौ द्राक् संवेदनं पुनः ॥५९३॥

संकोचं विजहच्छीघ्रमेति शक्तिस्वरूपताम् ।
व्यापिनीरूपतामेति समनात्मोन्मनात्मताम् ॥५९४॥
हृदयात्सम्प्रवृतस्याकारस्यैका कला मता ।
तत्रानच्कहकारस्याप्यन्तर्भावो हि विद्यते ॥५९५॥
परशक्तिविमर्शात्मा योऽकारो हकलापिवा ।
शाम्भवस्य स्वरूपस्य सदा विमर्शनात्मिका ॥५९६॥
नैतयोर्भासते भेदः स्थितयोर्ध्वनिवायुवत् ।
उकारश्चोच्चरेत्कण्ठे द्विमात्रस्तालुमध्यगः ॥५९७॥
मकारोऽपि त्रिमात्रावान् बिन्दुर्भ्रुव्यर्धमात्रकः ।
ललाटाग्रे तदन्ते च चन्द्रार्धो रोधिनी तथा ॥५९८॥
पादमात्रस्तदर्धा च, नादः षोडशकांशकः ।
मूर्द्धान्ते पल्लवप्रायोनादान्तोनात्रभिद्यते ॥५९९॥
शक्तिर्द्वात्रिंशदंशापि रन्ध्रान्ते, व्यापिनी पुनः ।
चतुःषष्ठ्यंशमात्रैव; त्वक्छेषे समना तथा ॥६००॥
चतुःषष्ठ्यंशमात्रैव केशदेशेऽनुभूयते ।
समतान्तस्य बिन्द्वादेर्मात्रांशानाञ्च मेलने ॥६०१॥
एकामात्रा तथा पूर्वत्रयाणांताश्च षट् ततः ।
सप्तमात्राः परित्यज्य विशेत्पदममात्रकम् ॥६०२॥

उत्तरोत्तररूपत्वं पूर्वंपूर्वस्य वस्तुनः ।
सृष्टौ लयेऽधराणां च क्रमादूर्ध्वोर्ध्वरूपता ॥६०३॥
सृष्टिर्भावात्मिकानन्दरूपौन्मुख्यात्प्रजायते ।
अभावात्मा निवृत्तेश्च संहारो बीजरूपता ॥६०४॥
परं सूक्ष्मं तथा स्थूलं रूपं सर्वस्य संस्थितम् ।
अत एकं त्रिधा भूत्वा भासते नामरूपतः ॥६०५॥
प्रारम्भो यत आरभ्य सृष्टौ यस्यास्ति वस्तुनः ।
नश्यतस्तस्य तत्रैव नाशपूर्त्तिश्च जायते ॥६०६॥
यथारम्भोऽवभासस्य रोधिन्यामेव जायते ।
तथा रोधोपि रोधिन्यां क्रमात्सृष्टौ च संहृतौ ॥६०७॥
सूक्ष्मप्रकाशरूपोहि वेद्यो बिन्दुः स्फुरत्यसौ ।
तस्यातिसूक्ष्मरूपत्वे सोऽर्धचन्द्रो विभाव्यते ॥६०८॥
लयेतस्य तमःकल्पा रोधिनी परिभाव्यते ।
निरोध्यनुभवान्तं च बिन्दुव्याप्तिः प्रवर्तते ॥६०९॥
निरोध्यन्तं क्रिया शक्तेर्ज्ञंप्तेर्नादान्ततः पुरा ।
अथवा तमभिव्याप्य व्याप्तिरस्या निवर्तते ॥६१०॥
इच्छाशक्तेरतश्चोर्ध्वं व्याप्तिर्बोध्योन्मनान्तगा ।
अकाराच्च मकारान्तमात्मतत्त्वं विभावयेत् ॥६११॥

बिन्दोरारभ्य नादान्तं शक्तितत्त्वं क्रियात्पुनः ।
आव्याप्तेरुन्मनान्तश्च शिवः साक्षाद्व्यवस्थितः ॥६१२॥
अहन्तैकरसाभिन्ना स्वावमर्शमयी सदा ।
स्वप्रकाशस्फुरत्तैवानवच्छिन्नोन्मना हि या ॥६१३॥
सानाश्रितपदाभिन्नसर्वभावोन्मुखात्मिका ।
स्फुरन्ती सर्वभावानां समनाऽसूत्रणात्मिका ॥६१४॥
उन्मनाव्योमतो जातं समना व्योम सुस्फुटम् ।
तज्जातं व्यापिनीव्योम विश्वाभावावभासकम् ॥६१५॥
ततः स्पर्शात्मिका शक्तिः प्रसुप्तभुजगाकृतिः ।
इत्थं शक्तिः परसूक्ष्मस्थूलरूपतयाऽभवत् ॥६१६॥
समना व्यापिनी शक्तिर्मेयासूत्रणभासिनी ।
स्पर्शाच्छक्त्यात्मनस्तस्मान्नादोऽव्यक्तोऽभवच्च यः ॥६१७॥
व्याच्यवाचकसामान्यध्वनिरूपतया पुरा ।
स्पन्दते यत्र नो भाति वाचकोऽपि विशेषतः ॥६१८॥
वाचकाभिन्नवाच्यस्य कथा तत्र तदा कथम् ।
शब्दग्रामः स्फुटत्यस्मादतः स्फोटोऽप्ययं मतः ॥६१९॥
सोऽयं सदाशिवोव्यक्तो देवो यो दृक्क्रियात्मकः ।
नादाद्बिन्दुः समुद्भूतः क्रिया शक्त्यात्मकः प्रभुः ॥६२०॥

अविभक्तस्वरूपं यो वेद्यवर्गस्य भाविनः ।
ईश्वरोबहिरुन्मेषः क्षेपोबिन्दुरयं स्मृतः ६२१॥
बहिरुल्लसितस्यापि अन्तराक्रमणं पुनः ।
आक्रान्तिर्नाद इत्यादि प्रोक्तं त्रैशिरसे मते ॥६२२॥
निमज्जनादिदन्ताया अहन्तोन्मज्जनात्मनि ।
नादान्ते मातृरूपायाः संविदो बोधएव यः ॥६२३॥
चिदुद्बोधः स कथितो बुद्धायाः संविदः पुनः ।
उद्रेको दीपनं शक्तौ व्यापिन्यां स्थापनं तथा ॥६२४॥
संवित्तिः समनायां स्यादुन्मनायां तदात्मता ।
अंतः सृष्टिं प्रकुर्वन्ती यथेयं समनोच्यते ॥६२५॥
तथा स्वस्यां जगत्सर्वं समना संहरन्त्यपि ।
शून्याभासतयाभास्य सम्पूर्णं जगदात्मनि ॥६२६॥
करोति जगतो नित्यं स्वाभेदात्मनिमज्जनम् ।
इति गर्भीकृतानन्तविश्वसृष्टिविनाशभूः ॥६२७॥
विद्यते भ्राजते चापि महासृष्ट्यात्मशक्तिभूः ।
उन्मनापरतत्त्वात्माभिन्नाऽभिन्नापि गम्यते ॥६२८॥
इत्थंविमर्शितोमन्त्रो योगिनां योगसिद्धिदः ।
अहम्मन्त्रविदां शीघ्रं भवेद्भुक्तिमतामपि ॥६२९॥

# पूर्णता-प्रत्यभिज्ञा

## प्रक्रियाविमर्शनम्

यस्याश्च सत्यामहमेव भामि
सर्वात्मना सर्वविकल्पहीनः ।
यत्नैरलभ्यामतिदुर्लभां तां
श्रीसद्गुरोर्नौमि दयार्द्रदृष्टिम् ॥१॥

स्वानन्दरसकल्लोलैरुल्लसन्नस्म्यहर्निशम् ।
यद्दृष्टिपरिपूतोऽहमाश्रये तत्पदद्वयम् ॥२॥

स्वात्मावमर्शसंलग्ना परासहितवैखरी ।
कृता येन गुरोस्तस्य वाचा कुर्यां स्तुतिं कया ॥३॥

गुरुस्तुतिपरैवेयं परासहितवैखरी ।
इत्येवं जानतो मे वाक् का न स्तौति गुरुं कदा ॥४॥

नमः श्रीमहसे तस्मै स्वात्मसाम्राज्यदायिने ।
भवबन्धच्छिदे दृष्टया नररूपत्रिशूलिने ॥५॥

प्रक्रियातः परं ज्ञानं नेतिशैवागमे क्वचित् ।
शक्तिपातस्य वैचित्र्यान्मत्यन्ते परयोगिनः ॥६॥

सृष्ट्यादितत्त्वमज्ञात्वा न मुक्तो नच मोचयेत् ।
इत्युक्तं गुरुणा गुप्तपादेनालोकषष्ठके ॥७॥
उत्पत्तिस्थितिसंहारान् ये न जानन्ति योगिनः ।
न मुक्तास्ते तदज्ञानबन्धनैकाधिवासिताः ॥८॥
अतो विज्ञा विनोदाय केचनाज्ञास्तु सिद्धये ।
दृश्यन्ते योगिनो लग्नाः सर्गक्रमविलोडने ॥९॥
ते शीघ्रं श्रवणेनैव यथाध्वज्ञानवैभवम् ।
प्राप्याप्नुवन्तु सम्पूर्णविश्वात्मत्वस्वरूपताम् ॥१०॥
तथा भूतमिदं वच्मि प्रक्रियाज्ञानबोधकम् ।
सावधानेन मनसा सद्भिस्तदवधीयताम् ॥११॥
षड्विधाध्वा परिज्ञातोऽभ्यस्तश्चापि यथाविधि ।
पूर्णभैरवरूपत्वं माहैश्वर्यं प्रयच्छति ॥१२॥
मेयभागगतोऽध्वास्ति पुरतत्त्वकलात्मकः ।
पदमन्त्रवर्णरूपो मातृभागगतस्त्रिधा ॥१३॥
यद्यप्यध्वा समस्तोऽयं प्रकाशाभिन्न एव सन् ।
तदिच्छया तथाप्येष भिन्नत्वेनापि भासते ॥१४॥
प्रबुद्धैरध्यते यस्माद् गम्यते सिद्धिमीप्सुभिः ।
गमनेनादनेनापि प्रोच्यतेऽध्वात्र शासने ॥१५॥

शिवतत्त्वात्मनि पदे यातव्ये प्राप्तिकारणम् ।
क्रमेण द्वैतिनामध्वा ज्ञानिनां तत्क्षणादिव ॥१६॥
संवित्तत्त्वात्मकं सर्वमध्वानं संविदात्मकः ।
इच्छयैव क्षणेनैव स्वात्मसात्कुरुते बुधः ॥१७॥
स्वच्छन्दे दशमे क्षेमराजेनाभिनवेन च ।
तन्त्रालोके कृतश्चायमन्वर्थं इत्थमध्वनः ॥१८॥

प्रकाशपरमार्थत्वात्स्वाविभागेन तिष्ठतः ।
मातृमेयात्मविश्वस्य शुद्धसंवित्स्वभावता ॥१९॥
स्थिता, तां पूर्णतां स्वस्य स्वेच्छयैवापसारयन् ।
विश्वस्मादहमुत्तीर्णं इत्यामृश्यैति शून्यताम् ॥२०॥
तदिदं स्वस्वरूपन्तु सर्वभावक्षयास्पदम् ।
योगिनां निरुपाख्येयं परं विश्रान्तिदं पदम् ॥२१॥
इदं शून्यप्रमातृत्वं परिहाय स्वभावतः ।
स्वस्मात्पृथक्कृतं विश्वं स्वीकर्तुं चोच्छलन्निव ॥२२॥
संविदात्मा शिवोऽध्यास्ते पुनः प्राणप्रमातृताम् ।
नित्यस्पन्दमयः प्राणो यद्यप्यस्त्येव तत्त्वतः ॥२३॥

तथापि प्रोक्तनीत्यैव प्रोक्तं श्रीकल्लटादिना ।
संवित्प्राक्प्राणतां प्राप्ता ततो बुद्धयात्मतां गता ॥२४॥
इतीत्थं क्रममासाद्य शून्यं प्राणं धियं पुनः ।
नाडीचक्रानुचक्रात्मदेहमा– भासयत्यपि ॥२५॥
ततः प्राणादिदेहान्ते बहिर्देशेऽपि मायया ।
स्वोद्भास्यमानतामात्रसारस्याप्यतिरेकिणः ॥२६॥
अध्वनोऽध्वपतेश्चापि स्थितिं भिन्नां प्रकल्पयन् ।
पुद्गलोऽणुः पशुर्जीवः संसारी शिव एव सः ॥२७॥
अवाप्तशक्तिपातः सन् स्वस्वरूपं पुनः स्मरन् ।
सद्यः समस्तमध्वानं स्वाभिन्नं कलयन् पतिः ॥२८॥

क्रियामूर्तिविहीनायाः क्रियावैचित्र्यभासनात् ।
संविदोऽस्त्येव कालाध्वा वर्णमन्त्रपदात्मकः ॥२९॥
भाति देशक्रमोमूर्तिवैचित्र्याभासतः पुनः ।
देशाध्वा प्रोच्यते सोऽत्र कलातत्त्वपुरात्मकः ॥३०॥
अस्याध्वनः परसूक्ष्मस्थूलरूपतया सतः ।
वर्णमन्त्रपदस्यापि कलातत्त्वपुरस्य च ॥३१॥

वाच्यवाचकभावेन स्थितस्य द्विविधस्य च ।
ज्ञातव्या स्वीयशक्त्यात्मक्रियास्फारसतत्त्वता ॥३२॥
तत्र वर्णा ह्यभेदेन भेदाभेदात्मना पुनः ॥
मन्त्राः पदानि भेदेन स्थिता विश्वविमर्शिनः ॥३३॥
अप्यध्वा पूर्वपूर्वोऽयं व्यापकत्वेन संस्थितः ।
उत्तरत्र तु पूर्वत्र व्याप्यत्वेनोत्तरोत्तरः ॥३४॥
इत्युत्तरस्य पूर्वत्र सत्त्वात्पूर्वस्य चोत्तरे ।
अन्तर्भूतत्वमस्त्येवं व्यापित्वं च समात्मता ॥३५॥
गर्भीकृतान्यपञ्चाध्वाध्वनो दीक्षाविधावतः ।
एकस्यैवाध्वनः शुद्धौ शुद्धिः सर्वस्य चोदिता ॥३६॥
इति सामान्यतः प्रोक्तमध्वतत्त्वमथाधुना ।
सुस्पष्टप्रतिभानार्थं मुच्यतेऽपि विशेषतः ॥३७॥
तत्रानेकप्रकारेण वर्णमन्त्रपदाध्वनाम् ।
तत्त्वं वच्मि स्वरूपं च सम्बद्धं वाचकात्मनाम् ॥३८॥
यत्स्वसंवेदनं प्रोक्तं स्वप्रकाशोऽपि यो मतः ।
यतो विश्वव्यवस्थेयं या संवित्पारमार्थिकी ॥३९॥
सेयं नैव विमर्शात्मस्वरूपमतिवर्तते ।
विमर्शोऽस्याः परोभागः स्वस्वरूपप्रकाशनात् ॥४०॥

परापरात्मिका सैव पश्यन्ती मानमुच्यते ।
यत्रापरांशगं मेयं तादात्म्यादवतिष्ठते ॥४१॥
नहि भिन्नेन मानेन मेयस्य स्याद्व्यवस्थितिः ।
मातृलग्नं यथामानं मेयं मानात्मकं तथा ॥४२॥
अतः संविदभिन्नेयं मातृमानप्रमेयता ।
गृह्णती स्वप्रकाशत्वं स्वभावादेव भासते ॥४३॥
तदत्रैव परांशोयः स मात्रंशोऽपरः पुनः ।
मेयांश उभयात्मैव मानं परापरात्मकम् ॥४४॥
अतः समस्त एवाध्वा भैरवाभेदवृत्तिमान् ।
तदिच्छया पृथक् तस्माद्भात्यस्त्यपि तथातथा ॥४५॥
भासमानत्व—मेवास्ति यतः सत्त्वं हि वस्तुनः ।
वर्णाध्वात्र प्रमारूपो मन्त्राध्वा मातृरूपधृक् ॥४६॥
अयं प्रमाणतां गच्छन् प्राप्नोत्येव पदाध्वताम् ।
प्रमाणरूपतावेशमपरित्यज्य मेयताम् ॥४७॥
विशन् संकल्पनायोगाद्याति सद्यः कलाध्वताम् ।
मातृसंगत एवायं कलाध्वा यद्यपि स्थितः ॥४८॥
तथापि मेयहेतुत्वात्कथ्यते मेयभागगः ।
अतो मेयावटश्चापि कलैवेयं निगद्यते ॥४९॥

सूक्ष्मशुद्धप्रमेयत्वयोगात्तत्त्वाध्वनामभाक् ।
स्थूलप्रमेयतायोगाद्भुवनाध्वा स उच्यते ॥५०॥

यत्प्रमारूपता प्रोक्ताऽध्वनोवर्णात्मकस्य वै ।
तत्प्रमायाः स्वरूपं स्वं प्रोच्यतेऽप्यधुना मया ॥५१॥
अनवच्छिन्नसहजपरामर्शमयी प्रमा ।
नतु प्रमाणजा काचिदत्रेष्टाऽन्यैः समीहिता ॥५२॥
परप्रमातृतैवेयं स्वातन्त्र्यात्मा प्रमा मता ।
इदं प्रमात्मकं वस्तु प्रमातुरुपरि स्थितम् ॥५३॥
इयं तुर्यदशा चापि जाग्रदादेः परा स्मृता ।
पूर्णतागमनौन्मुख्ये समावेशोऽपि शक्तिजः ॥५४॥
मेयं विश्रान्तिमायाति माने तच्चापि मातरि ।
सोऽप्यस्यामेति विश्रान्तिमितीयं विश्वजीवनम् ॥५५॥
मेयादित्रयसाध्या या मितिस्तत्रापि दृश्यताम् ।
मेयं मानं च मातारं त्यजन्तीयं विराजते ॥५६॥
उपायरहिता संवित्पश्यामीत्यनुपायिका ।
अतोऽहमात्मिका वित्तिः स्वप्रकाशा प्रमा मता ॥५७॥

वेद्यादिभेदरहिता प्रोक्ता सेयमनामया ।
सव्यापारेति च प्रोक्ता मात्राद्युल्लासनादियम् ॥५८॥
स्वीयावेशस्य तादात्म्यान्मातृतां मानतां पुनः ।
उपरागाच्च नैकट्यान्मेयतामियमेत्यपि ॥५९॥
मन्त्राणाञ्च पदानाञ्च भिन्नं रूपं त्रिकागमे ।
प्रोक्तं निःस्पन्दसस्पन्दभेदाद्भिन्नतयास्ति यत् ॥६०॥
विमर्शस्वभाव एवायं माता मन्त्रस्तथा पदम् ।
गुप्तभाषी मनुर्माता मानं क्षुब्धात्मकं पदम् ॥६१॥
क्षोभभाङ्मानमित्युक्तमक्षुब्धो मननात्मकः ।
औदासीन्यमिवापन्नो मन्त्रस्तूष्णीं व्यवस्थितः ॥६२॥
यैव पूर्णस्वरूपत्वादविभागमयी प्रमा ।
सा षट्त्रिंशत्पदार्थोच्छलद्वर्णात्मिका सदा ॥६३॥
वर्णाध्वा कथ्यते सोऽत्र प्रमात्मा मातृभागगः ।

वर्णाः सन्ति द्विधा भिन्ना मायिकाश्चाप्यमायिकाः ॥६४॥
अमायिका मायिकानाञ्च वीर्यत्वेन व्यवस्थिताः ।
सङ्केतनिरपेक्षास्तेऽनन्ताः संविद्विमर्शिनः ॥६५॥

तत एव च मायीया भिन्नाः प्रादुर्भवन्ति च ।
सङ्केतं ये न जानन्ति बाला वा तिर्यगादयः ॥६६॥
तेऽप्यकृत्रिमसंस्कारसारसंवित्प्रमामिमाम् ।
स्वीयस्वातन्त्र्यमायानुवेधोद्भासितभिन्नताम् ॥६७॥
विधाय मातृतां यान्ति वर्णैरेभिरमायिकैः ।
इमे सर्वार्थसामर्थ्या अनियन्त्रितशक्तयः ॥६८॥
स्वसंपृक्तधरान्तात्मस्वाभिन्नार्थविमर्शिनः ।
वर्णौघाः संविदं सत्यां प्रमारूपान्तु बिभ्रति ॥६९॥
वर्णाध्वाऽदिरतः सर्वाध्वनोऽयं समुदाहृतः ।
ज्ञेयश्चायं विशेषेण स्वस्वभावावमर्शिभिः ॥७०॥
ग्रस्ता वाच्यदशा यत्र चिद्विमर्शविशेषतः ।
च्युता मानमयाद्रूपात्संवित्तत्रापि सक्रिया ॥७१॥
ज्ञानक्रिये न भिन्ने स्तः संविदश्चाहमात्मनः ।
विमर्श एव देवस्य शुद्धे ज्ञानक्रिये यतः ॥७२॥
संविदः स्फुरणं द्वैधं क्षुब्धमक्षुब्धमेव च ।
तत्राक्षुब्धे प्रमातृत्वं मन्त्रत्वं पदताऽन्यथा ॥७३॥
बहिरौन्मुख्यविरहात्स्वावमर्शपरैव या ।
सैव मन्त्राध्वतां गत्वा पुनर्याति पदाध्वताम् ॥७४॥

पद्यते ज्ञायते येन तत्पदम्प्रोच्यते बुधैः ।
पदं मानं विकल्पात्म संजल्पात्मकमेव तत् ॥७५॥
वर्णान् संघट्य कुरुते पदं माता क्रमेण हि ।
पदेनार्थं परिज्ञाय विश्रान्ति भजतेऽपि च ॥७६॥
तत्तदर्थानुभवत उदेत्येव सुखादिकम् ।
प्रमातुः क्षोभ एषोऽत्र भोगावेशमयः स्फुटम् ॥७७॥
प्रमातृक्षोभरूपत्वाद्भोगावेशमयत्वतः ।
पदं प्रमाणमित्युक्तं कलाध्वा कलनेन च ॥७८॥
वर्णाः सन्त्येव सर्वत्र मन्त्रेष्वपि पदेष्वपि ।
वर्णं विना न मन्त्राः स्युर्न पदान्यपि तान् विना ॥७९॥
पदं विना न कलनं न कला कलनं विना ।
न कलाया ऋते तत्त्वं तद्विना भुवनं कुतः ॥८०॥
सुस्पष्टप्रतिपत्त्यर्थं तत्त्वमुक्तं पुनः पुनः ।
अध्वतत्त्वे परिज्ञाते शिवतत्त्वं प्रकाशते ॥८१॥

अथ मायिकमासाद्य वर्णं तत्रोच्यते पुनः ।
यथा शास्त्रं यथा कार्यं वर्णमन्त्रपदादिकम् ॥८२॥

अकारादिक्षकारान्तवर्णाः पञ्चाशदत्र वै ।
पदानि तत्र मन्त्राश्च दर्श्यन्तेऽपि यथागमम् ॥८३॥
अनुलोमविलोमाभ्यां सृष्टिसंहारकर्मणोः ।
प्राथम्यं सुपरिज्ञेयं शान्तिदीक्षादिकर्मणि ॥८४॥
अकारादिविसर्गान्तः पदमेकं प्रकीर्तितम् ।
ककारादिमकारान्ताः पञ्च वर्गाश्च पञ्च च ॥८५॥
यादयः सप्तमं ज्ञेयमष्टमं शादयस्त्रयः ।
हकारो नवमं ज्ञेयं क्षकारो दशमं स्मृतम् ॥८६॥
इतिसृष्टिक्रमे ज्ञेयं संहारे तु विपर्ययम् ।
श्रीपूर्वशास्त्रसम्मत्यां मातृकानुगतं पदम् ॥८७॥
दर्शितं दर्श्यतेऽन्यत्र यथा प्रोक्तं पदं पुनः ।
स्वच्छन्दे नवनवात्मप्रस्तारेऽन्यस्य नवैव तु ॥८८॥
ऊहरक्षमलवयोमित्येवक्रमभेदतः ।
एकाशीतिः पदान्येवमन्यत्रान्यादृशान्यपि ॥८९॥
अर्धमात्रात्मकं कालं वर्णानां संकलय्य च ।
एकाशीतिपदादेवी शक्तिः प्रोक्ता शिवात्मिका ॥९०॥
तथातथापरामर्शशक्तिचक्रेश्वरः प्रभुः ।
स्थूलैकाशीतिपदजपरामर्शैर्विभाव्यते ॥९१॥

तत एव परामर्शो यावतैकः समाप्यते ।
तावदेकं पदं ज्ञेयं न सुप्तिङ्भ्यां नियन्त्रितम् ॥९२॥
तत्रार्द्धमात्राः कादीनां त्रयस्त्रिंशद्धलां दश— ।
ह्रस्वानामपि पञ्चानां द्वात्रिंशत्तु भवन्त्यपि ॥९३॥
अष्टानामपि दीर्घाणां प्लुतस्यैकस्य षट् पुनः ।
लृ३तोऽन्ये तु स्वभावेन न प्लुता इत्युपेक्षिताः ॥९४॥
तन्त्रालोकाह्निके षष्ठे प्रोक्तमेतन्मतङ्गतः ।
पदं मध्यमवाग्वृत्त्या स्याद्यदोच्चरितं तदा ॥९५॥
तदेव तु भवेन्मन्त्रः पश्यन्तीवृत्तिसंस्थितम् ।
इत्येवं मालिनीतन्त्रे प्रोक्तं देवेन शम्भुना ॥९६॥
चतुस्त्रिंशच्च ते वर्णाः ककारान्ताः क्षकारतः ।
सन्ति क्रमेण पृथ्व्यादिसदाशिवान्तवाचकाः ॥९७॥ ॥९४॥
ये विसर्गाद्यकारान्ताः षोडशार्णाः स्वरा मताः ।
ते शक्तेः शिवतत्त्वस्याभेदेनैवावमर्शिनः ॥९८॥

श्री परात्रिंशिकायान्तु कलोथ नियतिः पृथक् ।
न पुंसो गणितः किन्तु महामायापि स्वीकृता ॥९९॥

अकारादिविसर्गान्तः शिवः शक्तिः क्ष एवसः ।
धरादिस्तुकवर्गोयं गन्धादिः स्याच्चवर्गगः ॥१००॥
पादादिश्च टवर्गः स्यात् घ्राणादिः स्यात्तवर्गगः ।
मनोबुद्धिरहंकारः प्रकृतिः पुरुषस्तथा ॥१०१॥
स्यादिदं पञ्चकं पादिमान्तं पञ्चकमेवहि ।
रागो विद्या कला माया यादयो धारणाभिधाः ॥१०२॥
शादिहान्ता महामायाविद्येश्वरसदाशिवाः ।
शक्तिरन्ते क्षकारः स्यादित्युक्तं तु पुरा मया ॥१०३॥
अकुलं कुलरूपंसद्भासतेऽक्रममेव यत् ।
उपदेश्योपदेशादिभासनात्क्रमवच्च तत् ॥१०४॥
शिवतत्त्वान्तरं यत्तु धरातत्त्वमुदाहृतम् ।
क्षकारेऽन्ते तु यच्छक्तितत्त्वमित्यत्र कः क्रमः ॥१०५॥
न सृष्टेर्नापि च ज्ञप्तेर्न स्थितेर्नापिसंहृतेः ।
नागमे दृश्यते क्वापि क्रमोयं समुदाहृतः ॥१०६॥
मालनीविजये सिद्धातन्त्रे स्वच्छन्दशासने ।
क्षकारतः पृथिव्यादेः सन्निवेशो हि दृश्यते ॥१०७॥
मालिनीमन्त्रमादाय पुनस्तत्रान्यथा यथा ।
फे धरातत्वमुद्दिष्टं चादिजान्तेऽनुपूर्वशः ॥१०८॥

त्रयोविंशत्यबादीनीत्याद्युक्तं पुनरन्यथा ।
सार्वेनाण्डद्वयं व्याप्तमेकैकेन पृथग्द्वयम् ॥१०९॥
अपरायाः समाख्याता व्याप्तिरेवं विलोमतः ।
पार्थिवप्राकृताण्डे द्वे फट्कारे विनिवेशिते ॥११०॥
हुं कारेपि च मायीयं ह्रींकारे शाक्तमेवच ।
पराभट्टारिकाव्याप्तिकथने पुनरन्यथा ॥१११॥
सार्णेनत्रितयं व्याप्तं त्रिशूलेन चतुर्थकम् ।
सर्वातीतं विसर्गेण पराव्याप्तिरुदाहृता ॥११२॥
सौःस्वरूपस्य हृदयबीजस्येयं प्रदर्शिता ।
व्याप्तिस्तु मातृसद्भावरतिशेखरमन्त्रयोः ॥११३॥
अन्यथैवसमादिष्टान्यतन्त्रेष्वेवमेव च ।
इति चेच्छ्रूयतामत्र प्रोक्तमप्युत्तरं पुनः ॥११४॥
अक्रमः शिव एवैको भाति सर्वत्मना सदा ।
रहस्यात्मपराशास्त्रसारं वच्मि च किंचन ॥११५॥
शक्तितत्त्वं परायां यत् तद्भूःपरापरात्मनि ।
यच्च तत्र धरातत्त्वं तच्छक्तिः प्रतिबिम्बनात् ॥११६॥
परात्मनि परामर्शे सन्ति तत्त्वानि वस्तुतः ।
परामर्शैकरूपाणि न भिन्नान्यत एव हि ॥११७॥

परापरात्मिकायां च भिन्नाभिन्नात्मकानि तु ।
प्रतिबिम्बस्वभावत्त्वात् कादिक्षान्तविपर्ययात् ॥११८॥
ऊर्ध्वंबिम्बेऽधरे दृष्टः प्रतिबिम्बे विपर्ययः ।
वामदक्षिणतादेस्तु तथा तत्त्वविपर्ययः ॥११९॥
इदं चातीवगहनं त्रिशिकोक्तं विशेषतः ।
तत एवावगन्तव्यं रहस्यं परमाद्भुतम् ॥१२०॥

भुवनानुगतं तत्वं यथा तत्तद्व्यवस्थितम् ।
तथा सुसूक्ष्मिकाशक्तिः कला तत्त्वानुगा स्मृता ॥१२१॥
सुखसंग्रहणार्थाय संज्ञेयं वा कला कृता ।
उपयोगस्तु दीक्षादौ यस्याः सर्वत्र विद्यते ॥१२२॥
बहिरुन्मुखतैवेयं परां काष्ठां धरां गता ।
निवृत्त्याख्या कला प्रोक्ता कलयित्री निवर्त्तनम् ॥१२३॥
षोडशानि पुराण्यत्र कालाग्न्यादीनि सन्ति च ।
पदं मन्त्रस्तथा वर्णः क्ष एवैको व्यवस्थितः ॥१२४॥
प्रधानान्तजलादीनाम् भेदस्थित्यनुबन्धिनी ।
त्रयोविंशतितत्त्वेषु प्रतिष्ठाख्या कला मता ॥१२५॥

हादिटान्ताश्च वर्णाः स्युः षट्पञ्चाशत् पुराणि च ।
पदमन्त्राश्च पञ्चैव द्वे पदे चतुरक्षरे ॥१२६॥
त्रीणि पञ्चार्णकानीयमाप्यायनी च कथ्यते ।
संकुचितस्वरूपस्य मायान्तेषु पुमादिषु ॥१२७॥
वेदनादेव विद्याख्या कला प्रोक्ता च सप्तसु ।
ञादि घान्ताश्च सप्तैव वर्णा अत्र स्थिता अपि ॥१२८॥
एकं पञ्चाक्षरं ज्ञेयं द्वितीयं द्व्यक्षरं पदम् ।
द्वे पदे द्वौ च मन्त्रौस्तोऽष्टाविंशति पुराण्यपि ॥१२९॥
बोधिनीपरनामेयं कला विद्या पदाभिधा ।
कञ्चुकात्मतरङ्गस्य शान्तेः शान्ता कला मता ॥१३०॥
शुद्धविद्येश्वरसदाशिवतत्त्वत्रये स्थिता ।
सन्त्यत्र ग ख का वर्णास्त्र्यक्षरं पदमेककम् ॥१३१॥
मन्त्रोऽप्येकः पुराण्यष्टादशैषोत्पूयिनी श्रुता ।
मायामतीत्य कलनाद् कला शक्तिशिवे पदे ॥१३२॥
शान्त्यतीता, कलानास्ति-कलातोते परे शिवे ।
संकल्पनाकलङ्कस्य सम्पूर्णस्य विलुप्तये ॥१३३॥
अस्ति षट्त्रिंशतोभिन्नः कल्पितो निष्कलः परः ।
षोडशात्र विसर्गाद्या अकारान्ताः स्वरा मताः ॥१३४॥

पदमेकं विसर्गादि-स्वरषोडशकात्मकम् ।
मन्त्रः स एव विज्ञेयो भुवनान्यत्र सन्ति न ॥१३५॥
भुवनानि समस्तानि शतमष्टादशोत्तरम् ।
षट्त्रिंशदेव तत्त्वानि कला पञ्चदशैव तु ॥१३६॥
मन्त्राः पदानि, पञ्चाशद् वर्णाश्चात्र कलाध्वनि ।

अथ तत्त्वानि गण्यन्ते स्थितान्यत्र यथा क्रमम् ॥१३७॥

शिव, शक्ति, सदाशिवेश्वर, शुद्धविद्या, माया, कला, विद्या, राग, नियति, काल, पुरुष, प्रकृति, बुद्धच, हंकार, मनः, श्रोत्र, त्वक्, चक्षु, जिह्वा, घ्राण, वाक्, पाणि, पाद, पायू, पस्थ, शब्द, स्पर्शं, रूप, रस, गन्धाकाश, वायु, वह्नि, सलिल, भूमयंः इत्येतानि षट्त्रिंशत्तत्त्वानि ॥

षट्त्रिंशदत्र तत्त्वानि प्रसिद्धानि तथापि च ।
तदर्धानि तदर्धानि पञ्च त्रीण्येकमेव वा ॥१३८॥
तत्त्वं स्वच्छन्दनेत्रादौ तन्त्रालोकेऽपि दृश्यते ।
तदेव क्रमशः स्पष्टज्ञानार्थमिह लिख्यते ॥१३९॥

एकं त्वशेषविश्वादि शिवतत्त्वमुरीकृतम् ।
नरशक्तिशिवाख्यानि नृस्थाने भुवनं क्वचित् ॥१४०॥
मायासदाशिवशिवव्याप्तानि त्रीणि सन्ति च ।
विज्ञानाकलपर्यन्त–मीश्वरान्तं ; ततः परम् ॥१४१॥
आत्मा विद्या शिवश्चापि तत्त्वत्रयमुदीरितम् ।
पृथिव्यापस्तथा तेजो वायुराकाशमेव हि ॥१४२॥
निवृत्त्यादिकलावद्धा विश्वव्यापीनि पञ्च वै ।
प्रकृतिः पुरुषश्चैव कालो नियतिरेव च ॥१४३॥
माया विद्या तथैवेशः सदाशिवः शिवो नव ।
भूतानि पञ्च सद्विद्या शक्ती रागः कला तथा ॥१४४॥
नवैतानि नवोक्तानि भवन्त्यष्टादशान्यपि ।
सूक्ष्माः शब्दादयः पञ्च ये च तन्मात्रसंज्ञकाः ॥१४५॥
ज्ञानकर्मेन्द्रियगणो मनोऽहंकारबुद्धयः ।
इत्यष्टादशभिः सार्द्धं षट्त्रिंशच्च भवन्त्यपि ॥१४६॥
मायान्तस्तु भवः प्रोक्तोऽभवः सदाशिवान्तकः ।
शिवान्तोऽतिभवो ज्ञेयः संसारस्त्रिविधः पुनः ॥१४७॥
लयाधिकारभोगाख्यावस्थासु त्र्यात्मना शिवः ।
अनाश्रितसदाशिवेश्वररूपतया स्थितः ॥१४८॥

ब्रह्मप्रकृतिमायाण्डजाग्रत्स्वप्नसुषुप्तिषु ।
ब्रह्मकेशवरुद्रात्मा बहिरन्तर्विराजते ॥१४९॥

नरशक्तिशिवात्मा सन् मेये माने च मातरि ।
क्रियाज्ञानैषणारूपः परपरापरोऽपरः ॥१५०॥

इत्थं यो बहुधा भिन्न एक एव सदा स्थितः ।
स्वप्रकाशमयो देवः स्वात्मानं तं समाश्रये ॥१५१॥

चिदानन्दैषणाज्ञानक्रियाशक्तिसुनिर्भरः ।
सामरस्यसमापन्नो गीयते परमः शिवः ॥१५२॥

चिदाद्येकैकमुख्यत्वप्रथनात्मकभूमिकाम् ।
भासयन् भासयति सः शिवं शक्ति सदाशिवम् ॥१५३॥

ईश्वरं शुद्धविद्याञ्च वस्तुपिण्डात्मकाण्डकम् ।
शक्त्यण्डमथमायाण्डं प्रकृत्यण्डं तृतीयकम ॥१५४॥

ब्रह्माण्डञ्च चतुर्थं यत् पृथ्व्यण्डापरनामकम् ।

मातृमेयात्मविश्वस्य स्वात्मरूपस्य सर्वदा ॥१५५॥

पराहन्ताचमत्कारसारभूततया सतः ।
स्वरूपापोहनात्मेयमख्यातिर्यास्ति तन्मयी ॥१५६॥

नञर्थाभावरूपात्मनिषेधव्यापृतिश्च या ।
सा शक्तिः परमेशस्य शक्त्यण्डमिति प्रोच्यते ॥१५७॥
मायाप्रकृतिपृथ्व्यण्डं गर्भीकृत्याग्रिमत्रयम् ।
सदाशिवेशविद्यान्तं दलं सदवतिष्ठते ॥१५८॥
अस्मिन्नण्डे ह्यधिपती देवौ सदाशिवेश्वरौ ।
मलत्रयस्वभावत्वात्स्थितं मोहमयं च यत् ॥१५९॥
भेदैकप्रवणत्वाच्च प्रमातु र्बन्धनात्मकम् ।
दलं पुंस्तत्त्वपर्यन्तमण्डं मायात्मकञ्च तत् ॥१६०॥
पूर्ववद्वक्ष्यमाणाण्डमन्तः स्वीकृत्य संस्थितम् ।
रुद्रो गहननामात्र स्वामी देवो विराजते ॥१६१॥
प्रकृतिः सा परिणता या कार्यंकरणात्मना ।
भोग्या पशुप्रमातॄणां बन्धयित्री सुखादिना ॥१६२॥
सा प्रकृत्यण्डमित्युक्तं विष्णुरस्येश्वरः स्मृतः ।
या स्थूलकञ्चुकमयी मातॄणां प्रति रूपतः ॥१६३॥
चतुर्दशविधे भूतसर्गे बन्धनकारिणी ।
पृथ्वी सैव तुरीयाण्डं ब्रह्मदैवतमुच्यते ॥१६४॥
विचित्रतनुकरणभुवनादिप्रवाहवद् ।
विश्वमन्तर्भवत्येषु शिवो भोक्ता पशुर्भवन् ॥१६५॥

पार्थिवेऽण्डे निवृत्त्याख्या प्रतिष्ठा प्राकृते तथा ।
विद्याख्यापि च मायीये शाक्ते शान्ता कला मता ॥१६६॥
सत्येव स्थिरबोद्धृत्वे बोध्यत्वेन विभावनात् ।
तथातथाविकल्पात्मकला स्वातन्त्र्यतश्शिवे ॥१६७॥
अतश्शिवे च तत्रस्थे व्यापिन्यादावपि स्थितिः ।
अस्त्येव भुवनानां वै नाण्डस्यावरणात्मनः ॥१६८॥

अण्डञ्च भुवनानां हि विभागस्थितिसाधकम् ।
तदेवावरणं प्राहुः शक्त्यन्तं तच्च सम्भवेत् ॥१६९॥
मूर्त्तत्वप्रतिघातत्वे ये स्तोऽण्डत्वप्रयोजके ।
तदभावाच्छिवे नास्ति ह्यण्डमावरणात्मकम् ॥१७०॥
नन्वेवं पृथिवीम्मुक्त्वा न स्यादण्डं हि किञ्चन ।
मूर्त्तत्वप्रतिघातत्वे यतो नान्यत्र संस्थिते ॥१७१॥
इत्याशङ्क्याभिनवेन प्रोक्तं पञ्चैव सन्ति वै ।
पृथिव्यादीनि तत्त्वानि सम्मतानि गुरोर्मम ॥१७२॥
पञ्चत्रिंशत्तु तान्येव षट्त्रिंशत्तम ईश्वरः ।
अतः कालोत्तरे प्रोक्ता पञ्चमन्त्रतनोरपि ॥१७३॥

पृथिव्याद्यात्मनो व्याप्तिर्गन्धादेश्च यथाक्रमम् ।
सद्यस्तु पृथिवी ज्ञेयो वामो ह्यापः प्रकीर्तितः ॥१७४॥
अघोरस्तेज इत्युक्तो वायुस्तत्पुरुषः स्मृतः ।
आकाशस्तु भवेदीशः स्वयं देवो महेश्वरः ॥१७५॥
पृथिव्याद्यात्मकत्वादि पञ्चमन्त्रतनोरपि ।
अभेदेनैव स्वीकृत्य व्याप्तिस्तस्य प्रदर्शिता ॥१७६॥
तन्त्रालोके तत एव प्रोक्तं श्रीगुरुणापि च ।
व्याप्तो गन्धो धरायां वै प्रकृत्यन्ते रसस्तथा ॥१७७॥
मायान्ते रूपमस्त्येवं शक्त्यन्ते स्पर्श एव च ।
तत्स्पर्शान्ते तु संवित्तिः शुद्धचिद्व्योमरूपिणी ॥१७८॥
तस्यां रूढः समभ्येति स्वप्रकाशात्मिकां पराम् ।
निवृत्तिर्धारिका पृथ्वी प्रतिष्ठाप्यायिनी जलम् ॥१७९॥
विद्याबोद्ध्री तथा तेजः शान्तैवोत्पूयिनी मरुत् ।
समानार्थंस्तथाऽऽकाशः शान्तातीताऽवकाशदः ॥१८०॥
इत्थं श्रीपूर्वशास्त्रेऽपि धराद्यर्थंकनामभिः ।
कलां व्यवहरन् स्पष्टं धरादेरेव तत्त्वताम् ॥१८१॥
प्रोक्तवानित्यभिनवगुप्ताचार्योऽपि प्रोक्तवान् ।
आनन्त्यं भुवनानां तु प्रोक्तं स्वच्छन्दशासने ॥१८२॥

दीक्षोत्तरे तथापीशास्तेषां पञ्चैव कीर्त्तिताः ।
ब्रह्माण्डकर्प्परिकाऽधोवर्त्त्यनन्तात्प्रधानान्तम् ॥१८३॥
ब्रह्मैवेशस्ततो विष्णुः पुंस्तत्त्वादाकलावधि ।
ग्रन्थादिप्रविभक्ताया मायाया रुद्र ईशिता ॥१८४॥
मायाया अविभक्ताया मतः स्वामीश्वरस्तथा ।
शुद्धविद्येश्वरसदाशिवस्वामि— अनाश्रितः ॥१८५॥
पञ्चानां कारणानां यो व्यापकः परमः शिवः ।
शक्तेरीशः स एव त्वं ग्रासीकृताध्वमण्डलः ॥१८६॥
अतः समस्तमध्वानमध्वेशेषु च तान् पुनः ।
देहप्राणमतौ पश्चात् संवित्तौ प्रविलापयन् ॥१८७॥
संविदेकात्मतानीतभूतभावपुरादिकः ।
अव्यवच्छिन्नसंवित्ति भैंरवो भवसि क्षणात् ॥१८८॥
इत्यभिनवगुप्तेन गुरुणापि महात्मना ।
तन्त्रालोकेऽष्टमे प्रोक्तं प्रोक्तं जयरथेन च ॥१८९॥
इत्थं स्वसंवित् परिशील्यमाना ।
स्वात्मीकृताशेषषडध्ववर्गा ॥१९०॥
द्वयावभासं परिमुच्य सद्योऽ-
द्वयावभासात्मतया चकास्ति ॥१९१॥

षट्त्रिंशत्तत्त्वमध्येऽपि शक्तिर्विद्या पुमानिति ।
तत्त्वत्रयमुपादेयं विशेषेणैव योगिनाम् ॥१९२॥
यत एषां विभक्तानां ज्ञानेन ज्ञायते बुधैः ।
रुद्रशक्तिसमावेशो यः स पञ्चाशदात्मकः ॥१९३॥
मायान्तं पुरुषव्याप्तिरासादाख्याद्वियस्तथा ।
शिवान्तं स्वीयशक्तेश्च व्याप्तिः सद्भिः प्रदर्शिता ॥१९४॥
दर्शितासद्भिरित्येवं नाहं शब्दानुवादकृत् ।
तत्संविदैक्यमापन्नः पश्यामि भवदात्मकः ॥१९५॥
तत्र शक्तेस्त्रयोभेदा इच्छाज्ञानक्रियात्मकाः ।
चतुर्धास्ति पुमान् भिन्नः शुद्धो ज्ञानाकलोऽकलः ॥१९६॥
सकलश्च तथैवेयं विद्यापि दशधा स्मृता ।
वर्णो बिन्दुस्तथा चन्द्रो रोधिनी नाद एव च ॥१९७॥
नांदान्तो व्यापिनी शक्तिस्समनाप्युन्मना तथा ।
तत्राप्यशुद्ध एवायं पुमान् भेदमयत्वतः ॥१९८॥
शुद्धयमानास्ति विद्यापि भेदाभेदमयत्वतः ।
शक्तिः शुद्धस्वरूपैव शिवाभेदमयत्वतः ॥१९९॥
अंशांशग्रहणेनैव यथा कस्यापि वस्तुनः ।
सम्पूर्णस्य भवेद्बोधस्तथा शम्भो भंवत्यपि ॥२००॥

रुद्रशक्तिसमावेशमतः प्रारभ्य प्रोक्तवान् ।
श्रीपूर्वे पञ्चधाभिन्नं समावेशमनन्तरम् ॥२०१॥
पञ्चाशद्भेदभिन्नञ्च पूर्णवेशप्रदायिनम् ।
तत्र तत्त्वत्रयस्योक्तो भेदस्सप्तदशात्मकः ॥२०२॥
पञ्चाशच्च भवेदेवं त्रयस्त्रिंशतिमेलने ।
नाङ्गादङ्गी न वा धर्माद्धर्मी भिन्नोऽत्र शासने ॥२०३॥
शक्तिशक्तिमतोर्भेदो यथा नास्त्यत एव हि ।
तत्त्वत्रयस्य शक्त्यादेर्नं पुनर्गणना कृता ॥२०४॥
पञ्चधा शक्ति, विद्यात्म, तत्त्व, भूत, विभागतः ।
समावेशो भवेत्सोऽपि प्रोक्तपञ्चाशदात्मकः ॥२०५॥
पञ्चधा भूतसंज्ञोऽत्र त्रिंशद्वा तत्त्वसंज्ञकः ।
आत्माख्यस्त्रिविधो ज्ञेयो विद्याख्यो दशधा स्थितः ॥२०६॥
शक्त्याख्यो द्विविधो ज्ञेयः किन्तु त्रिंशत्त्वसिद्धये ।
अत्र पक्षे तु तत्त्वान्तः शक्तिविद्यात्मनामपि ॥२०७॥
सामान्यरूपमादेयं त्रिंशत्त्वं नान्यथा भवेत् ।
नचान्यत्रेव भूतादेरत्र भेदश्शिवाद्विभोः ॥२०८॥
अतोरुद्रसमावेशमुद्दिश्याभिहितः पुनः ।
भूतादीनां समावेशः पञ्चाशद्वा विशेषतः ॥२०९॥

संविदोऽस्यास्तु वैचित्र्यख्यापनार्थं विचित्रता ।
दर्शिता याऽऽगमेनापि चित्रा सा सद्भिरीक्ष्यताम् ॥२१०॥
पुंशक्त्योरत्र भेदोऽस्ति एकैकोनो धियस्तु सः ।
पूर्ववद्दशधैवास्तीत्येकेयमपराऽपि सा ॥२११॥
यतो विभज्यमानाच्च रूपादन्यदुरीकृतम् ।
अविभक्तस्वरूपं यत् तत्त्वान्तर्गण्यते त्रयम् ॥२१२॥
समावेश्यतया नात्र षट्त्रिंशत्तम आहृतः ।
आहृतः किन्तु पूर्वत्र तत्त्वरूपतया शिवः ॥२१३॥
अतः श्रीमताभिनवगुप्ताचार्य्येण स्वीकृतः ।
कल्पितत्वाच्च तत्त्वानां सप्तत्रिंशत्तमः परः ॥२१४॥
अष्टात्रिंशत्तमोऽप्येवमुपदेशाय युज्यते ।
सप्तत्रिंशात्मकः किन्तु सोऽपि स्यान्न परः पुनः ॥२१५॥
ईक्ष्यताश्च यथाह्यत्र नानवस्थापि काचन ।
पञ्चभूतात्ममन्त्रात्मसद्योजातादिपञ्चके ॥२१६॥
पञ्चत्रिंशत्पदार्थात्मवेद्ये विगलिते तु यत् ।
शिष्यते भावसंस्कारे नष्टेऽपि तदनाश्रितम् ॥२१७॥
शिवतत्त्वमितिप्रोक्तं महाशून्यमिव स्थितम् ।
तत्कीदृगित्यभिलषन् पृष्टो वाप्यनुगामिभिः ॥२१८॥

चिदानन्दमयं देवं वेत्ति स्वात्मानमद्वयम् ।
वक्ति वा पुनरत्रापि नाकाङ्क्षोदेति काचन ॥२१९॥
अभिन्न एव पूर्वस्मात्सप्तत्रिंशत्तमोऽप्ययम् ।
नन्वस्य वेद्यतायोगाद्भेदकोऽस्त्येव यः पुनः ॥२२०॥
अष्टात्रिंशत्तमः सोऽपि कल्पयेदन्यवेदकम् ।
इति चेन्न न वेद्यत्वं कल्पितं भेदकारकम् ॥२२१॥
भवेद्यतोऽनयोर्भेदहेतुर्धर्मान्तरं न हि ।
अविभक्तस्वतन्त्रत्वचिन्मयत्वस्वरूपता ॥२२२॥
समैवास्त्यनयोः किञ्च वेद्यवेदकरूपता ।
कल्पिता कालभेदेन भावनामात्रसाधिका ॥२२३॥
अतोऽस्यास्ति शिवस्यापि समावेश्यत्वमीदृशम् ।
इत्याशयस्तु गुप्तस्य प्रविभज्य प्रदर्शितः ॥२२४॥
पञ्चधा प्रविभज्यैव पञ्चाशद्धा प्रदर्शितः ।
श्रीपूर्वोक्तः समावेशो जयेनापि प्रदर्शितः ॥२२५॥

अविकल्पपथारूढो येन येन पथाविशेत् ।
धरासदाशिवान्तेन तेन तेन शिवी भवेत् ॥२२६॥

जड़ेन यः समावेशः स जड़प्रतिबिम्बनम् ।
न तु तादात्म्यमेवं स्याज्जड़ता वा चिदात्मता ॥२२७॥
चितः संकुचितायाश्चासंकुचितचिता सह ।
स्वतन्त्रयाऽस्वतन्त्राया ऐक्यं तादाम्यमेव यत् ॥२२८॥
स समावेश इत्युक्तो बोधैकात्म्यमिदं स्फुटम् ।
स्वोद्भासितास्वतन्त्रात्मबुद्ध्यादि द्राङ् निजेच्छया ॥२२९॥
निमज्येति गुणीकृत्यानादृत्य स्वात्मना स्थितिः ।
स्वात्माभिमुखबोधेन विकल्पक्रममन्तरा ॥२३०॥
स्वतन्त्रबोधरूपेण तादात्म्यापत्तिरेव या ।
अविकल्पा स्थितिस्सेयं भावनाद्यनपेक्षिणी ॥२३१॥
शिवतादात्म्यमापन्ना समावेशस्स शाम्भवः ।
वस्तुनोह्यविकल्पेन सिद्धिर्नैव विकल्पतः ॥२३२॥
विकल्पः स्मृतिरूपो हि वस्त्वपेक्षाविवर्जितः ।
सिद्धमेवाविकल्पेन विकल्पेनानुगम्यते ॥२३३॥
अतोऽपेक्षा विकल्पस्य विद्यते न चिदात्मनि ।
नैर्मल्यविरहभ्रान्त्या विकल्पोऽयं भवन्नपि ॥२३४॥
अविकल्पप्रसूतत्वान्नोपायः संविदो भवेत् ।
पूर्वाभ्यासवशात् क्वापि क्वापीशेच्छावशात्पुनः ।

अभ्यासेनापि कुत्रापि नैर्मल्यं संविदो भवेत् ॥२३५॥
यस्मादहेतुकस्यापि शक्तिपातस्य मुख्यतः ।
नवधा चर्चितो भेदो भेदभेदोऽप्यसंख्यकः ॥२३६॥
इत्थमिच्छात्मकः शैवः समावेशः प्रदर्शितः ।
उपयोगो न यत्रास्ति भावनादेस्तु लेशतः ॥२३७॥
अखण्डवस्तुनो भासोऽविकल्पेऽक्रमतो भवेत् ।
विकल्पे तु क्रमेणेति शाक्तो वैकल्पिको मतः ॥२३८॥
अहंकारेण मनसा बुद्ध्या वा यद्विकल्पनम् ।
सर्वत्राहं स्थितं सर्वं मय्येवास्ति व्यवस्थितम् ॥२३९॥
अथवाहमहमिति स्वावमर्शनमेव यत् ।
तच्छाक्तः प्रोच्यते सद्भिरुपायोऽभ्यासियोगिने ॥२४०॥
विकल्पत्वाच्च भेदात्माऽभेदात्मार्थानपेक्षणात् ।
इत्युभयात्मकः शाक्त उपायोऽयं हि मायिकः ॥२४१॥
तथाप्यभ्यस्यमानस्सन् द्वैतं भेदावभासनम् ।
स्वरूपाच्छादिकां मायां द्वैतभासनकारिणीम् ॥२४२॥
निघ्नन्स्वाऽकलनाशैवोपायेन सह योजयन् ।
स्वात्मनः शिवरूपत्वं प्रत्यभिज्ञापयत्ययम् ॥२४३॥
निर्विकल्पात्मकाच्छैवाच्छाक्ते ज्ञानक्रिये स्फुटे ।

यद्यपि स्तस्तथाप्यत्र भातस्संकुचिते च ते ॥२४४॥
संकोचस्य परित्यागो भवत्यभ्यासशालिनः ।
अतोऽभ्यासस्समादेयः परतत्त्वविविक्षुणा ॥२४५॥
अभ्यासोऽप्यद्वये बोधे यद्यप्यनुपयोगवान् ।
तथापि द्वैतमालिन्यशङ्का निर्मूलनाय सः ॥२४६॥
किञ्चाभ्यासोऽपि नान्यः स्यादृते भेदव्यपोहनात् ।
भेदवारणपञ्चास्यतर्कस्याप्यत एव हि ॥२४७॥
योगाङ्गत्वं स्फुटं प्रोक्तं तन्त्रविद्भिरनुत्तमम् ।
शाम्भवी त्वविकल्पात्मा दशा स्वारसिकी पशोः ।
किन्तु सा मितमातृत्वान्मितैवास्त्यमितापि या ॥२४८॥
व्यतीते मितमातृत्वे पूर्णा पूर्णप्रमातृका ।
मितमातृत्वगौणाय परमातृत्वक्लृप्तये ॥२४९॥
प्रत्यभिज्ञाफलोपाय उपादेयो यथायथम् ।
वैकल्पिकीं विना बुद्धिं नाणवोऽप्यस्ति कश्चन ॥२५०॥
तथाप्यस्त्येव महती भिदाप्याणवशाक्तयोः ।
चेतसा स्मरणं शाक्तं बाह्यं नैवावलम्बते ॥२५१॥
उच्चारादि पुनर्बाह्यमालम्ब्यैवाणवो भवेत् ।
माया कार्यात्मना बुद्ध्याऽहंकृत्या मनसापि वा ॥२५२॥

नोर्द्ध्ववर्त्तिशिवं व्याप्तुं ज्ञातुं वार्हः पुमानयम् ।
इति शङ्का न कर्त्तव्या यतः सर्वं शिवात्मकम् ॥२५३॥
अतो बुद्धिमनोभूमावपि भाति परं पदम् ।
अणुस्वातन्त्र्यजन्मापि विकल्पो निश्चयात्मताम् ॥२५४॥
सम्यक् संस्कारतो गच्छन् भोगमोक्षौ प्रयच्छति ।
तत्रोपायानपेक्षोऽस्ति शाक्ते सोपाय आणवे ॥२५५॥
संस्कारस्त उपायाश्च प्राणबुद्धिशरीरगाः ।
नतु शून्ये यतः शून्यं परिच्छेदविवर्जितम् ॥२५६॥
प्राणोच्चारमपेक्ष्यस्याद्दूरं ध्यानादि बुद्धिगम् ।
ततोऽपि करणादि स्याद्दूरं देहगतं पुनः ॥२५७॥
ततोऽपि दूरं बाह्यं स्यान्मण्डलस्थण्डिलादिकम् ।
अन्तिकत्वं च नैकट्यं चिद्रूपोन्मज्जने हि तत् ।
बाह्यत्वमपि दूरत्वं यच्चिद्रूपनिमज्जनम् ॥२५८॥
यथा यस्यास्ति दूरत्वं तथा तस्यास्ति वेदने ।
प्रयत्नस्तारतम्येन न यत्नः सुखवेदने ॥२५९॥
अन्तिकं शिवतत्त्वं तु सर्वस्मादत एव हि ।
भावनाकरणादीनां यत्नानां न शिवेऽस्तिता ॥२६०॥
स्वापरामर्शनं ह्येतदपराधो महान्ननु ।

अन्तिकस्थोऽपि येनासौ शिवो दूरातिदूरगः ॥२६१॥
नच बीजाङ्कुरलता दलपुष्पफलादिवत् ।
क्रमिकेयं भवेत्संविद् यतो भात्येव सर्वदा ॥२६२॥

यदेकं सदनेकत्र भुवनादौ प्रभासते ।
अनुगामितया रूपं तत्तत्वमिति प्रोच्यते ॥२६३॥
अत्रास्त्येकं परं तत्त्वं शिवः षट्त्रिंशदात्मकः ।
प्रकाशमानतादानात् सर्वस्यैव प्रकाशकः ॥२६४॥
ननु विश्वं प्रकाशैकपरमार्थमिदं यदि ।
तदा पुनः पृथिव्यादे रन्यस्यासत्त्वमेव हि ॥२६५॥
इति चेन्नहि तस्यैव स्वातन्त्र्यात्तु सदैव हि ।
यतो भेदोऽपि भात्येव तत्त्वं स्यादनुगामि तत् ॥२६६॥
तत्रैषां सर्वतत्त्वानां कर्तेशानः परः शिवः ।
कार्यकारणभावोऽपि शिवेच्छापरिकल्पितः ॥२६७॥
ज्ञातव्योऽत्र विशेषेण द्विविधः शास्त्रसम्मतः ।
ईश्वरेच्छानियत्यादिकल्पितोऽकल्पितस्तथा ॥२६८॥
शिवादि धरणीं यावत् प्रथनं यत् प्रभोरिदम् ।

स्वतन्त्रस्य स्वभावेन स ज्ञेयः पारमार्थिकः ॥२६९॥
स्वरूपानुगतं सिद्धं नियत्यादिनियन्त्रितम् ।
यावत्येव यदा यत्र पौर्वापर्य्याविभासनम् ॥२७०॥
तावत्येव तदा तत्र स्वीकार्यः कल्पितोऽप्ययम् ।
यतोऽङ्कुरो भवेत्क्वापि योगीच्छामात्रतः पुनः ॥२७१॥
बीजाच्चापि पुनः क्वापि स्वप्नादौ तु घटादितः ।
पारमार्थिक एवायं कल्पितोऽप्यस्ति वस्तुतः ॥२७२॥
परमार्थादृते सत्ता घटते कल्पितस्य न ।
गोमयादपि कीटाच्च योगीच्छातोऽपि वृश्चिकः ॥२७३॥
क्वचिदुत्पद्यते मन्त्रादौषधाच्च यतस्ततः ।
कल्पितत्वाच्च शास्त्रेऽपि भेदो यः परिदृश्यते ॥२७४॥
कार्यकारणभावे स तत्वानां सङ्गतो न न ।
अस्वतन्त्रस्य कर्त्तृत्वं जडस्य नोपपद्यते ॥२७५॥
स्वीकृता लक्षणा तस्मात् तिङर्थकृतिवादिना ।
वस्तुतः सर्वकर्त्तृत्वमीश्वरस्यैव वर्त्तते ॥२७६॥
तन्महिम्नैव लोकाना-मभिमानो भवत्ययम् ।
अहं करोमि कृतवान् क्रियतेऽनेन वा कृतम् ॥२७७॥
इत्यादि व्यवहारोऽयं लोके सर्वत्र मायिकः ।

माया शक्तिः शिवस्यैव भेदाभासनरूपिणी ॥२७८॥
यया वस्त्वन्यथा भाति स्वस्वातन्त्र्यजिघांसया ।
चिदानन्दैषणाज्ञानक्रियाशक्तिसुनिर्भरः ॥२७९॥
स्वभावाद् भासयन्नस्ति स्वरूपानधिकं क्रमम् ।
शिवशक्तिसदेशानविद्यातत्त्वात्मनात्मना ॥२८०॥
शिवः स्वतन्त्रदृग्रूपः पञ्चधा प्रविभज्यते ।
शाम्भवेषु च शाक्तेषु मान्त्रमाहेश्वरेषु च ॥२८१॥
मान्त्रेश्वरेषु मान्त्रेषु वर्गेषु क्रमशः पृथक् ।
शिवः शक्तिः सदेशान ईशो विद्यापि पञ्चमी ॥२८२॥
शुद्धाध्वा पञ्चकमिदं शिवेच्छैवात्र कारिका ।
ब्रह्मविष्णुहरेशान—सुशिवानाश्रिताश्च ये ॥२८३॥
षट्ककारणनामानस्—ते न तत्त्वपदाभिधाः ।
किन्त्वान्तरदशोद्रेकात् सादाख्यं तत्त्वमादितः ॥२८४॥
बहिर्भावपरत्वे तु परतः पारमेश्वरम् ।
इत्युक्तेरान्तरदशोद्रिक्तत्वादिकमेव हि ॥२८५॥
तत्वं न तु तदीशानो भूमेरीशो नृपो यथा ।
कार्यकारणभावो यः स जडे नोपपद्यते ॥२८६॥
किन्तु चिद्रूप एवेति कर्त्ता सर्वत्र चेतनः ।

स्वप्रकाशविमर्शैकपरमार्थवपुर्विभुः ॥२८७॥
अन्तरात्मतया भाति वहिरात्मतयापि च ।
इत्थमुत्थापयन् देवः कालक्रममनारतम् ॥२८८॥
स्वयं सन् धर्मिरूपोऽयं धर्मत्वेन पुनः क्रियाम् ।
स्वीकरोति क्रमाभासां तामन्तर्बहिरात्मताम् ॥२८९॥
अन्योन्यमवियुक्ते हि प्रभोर्ज्ञानक्रिये इमे ।
वपुषी सर्वभावानां ते एव पारमार्थिके ॥२९०॥
अतः श्री प्रत्यभिज्ञाया मुक्तं देवेन सुस्फुटम् ।
इत्थं तथा घटपटाद्याभासजगदात्मना ॥२९१॥
तिष्ठासोरेवमिच्छैवं हेतुता कर्त्तृता क्रिया ।
अत उपदेशविभास्यमानमवभासस्वरूपमपि शिवतत्त्वम्॥२९२॥
भावनाद्युपयोगितयोक्तं क्रियाधृतप्रपञ्चनस्वातन्त्र्यम् ।
ऐश्वरे शुद्धसर्गेऽपि चास्त्यन्तर्बहिरूपता ॥२९३॥
चिन्मात्रापेक्षया ह्यत्र मायीयेत्वीशतः पुनः ।
वपुः सर्वपदार्थानां शिवतत्त्वं विभासितम् ॥२९४॥
भासते सर्वभावोऽयं यतस्तद्भित्तिसंस्थितः ।
आगमस्य समस्तस्य तात्पर्यार्थस्तदेव हि ॥२९५॥
अतोऽग्रे सर्वतत्त्वानां कीर्त्तनं तस्य राजते ।

स्वातन्त्र्यात्तु निजं रूपं बोधृधर्मादविच्युतम् ॥२९६॥
उपदेशतदावेशपरमार्थत्वसिद्धये ।
बोध्यतामानयन् देवः स्फुटमेव विभाव्यते ॥२९७॥
अत एवोत्पलेनापि प्रोक्तेशस्यापि निर्मितिः ।
स्वातन्त्र्यामुक्तमात्मानं स्वातन्त्र्यादद्वयात्मनः ॥२९८॥
प्रभुरीशादि संकल्पै निर्माय व्यवहारयेत् ।
चित्तत्त्वस्याचलस्यैव चलनाभासपूर्वकम् ॥२९९॥
किञ्चिच्चलनभं तत्त्वं सदाशिवेश्वरोभयम् ।
मन्त्रमहेश्वरनामा शुद्धचैतन्य-वर्गोऽस्ति ॥३००॥
प्रतिबिम्बतया यस्य भावचक्रमिदं समम् ।
सृष्टौ च ध्यामलप्रायमुन्मीलितसुचित्रभम् ॥३०१॥
ध्वंसोन्मुखं तु संहारे मनोराज्यमिव स्थितम् ।
तस्य चैतन्यवर्गस्य भावचक्रे कनीयसि ॥३०२॥
यत्तथा प्रथनं तद्धि तत्त्वं सदाशिवात्मकम् ।
चिद्विशेषात्मसामान्यं विमर्शिन्यां विनिश्चितम् ॥३०३॥
मन्त्रेश्वरादिवर्गस्य बहिर्वेद्यमिव स्थितम् ।
पूर्णचित्रप्रतीकाशं वेद्यं तत्रास्ति तस्य या ॥३०४॥
स्थित्यवस्था तदेवास्तीश्वरतत्त्वमपि स्फुटम् ।

तस्मिन्नेवेश्वरे तत्त्वे संस्थिताः परमेश्वराः ॥३०५॥
शिवेच्छानुमताः सर्वे जगतः प्रभविष्णवः ।
अनयोस्तत्त्वयोरीशौ मतौ सदाशिवेश्वरौ ॥३०६॥
ययोरुपासना चापि विष्णवादेरिव सिद्धिदा ।
अस्त्यनन्योन्मुखः कश्चित् प्रकाशः सविमर्शकः ॥३०७॥
अहमित्यात्मक, इदमित्यप्यन्योन्मुखः पुनः ।
शिवभट्टारके पूर्वोऽपरो विद्येश्वरेषु च ॥३०८॥
वस्तुतोऽयमिदमपि विश्राम्यत्यहमात्मनि ।
इदमित्यस्य विच्छिन्नविमर्शस्य कृतार्थता ॥३०९॥
या स्वस्वरूपे विश्रान्तिर्विमर्शः सोऽहमित्ययम् ।
इत्युक्तमुत्पलेनैवाजडप्रमातृसाधने ॥३१०॥
इदमंशं गुणीकृत्य ग्राहके चाहमात्मनि ।
सदाशिवविमर्शोऽस्ति ध्यामलप्रायवस्तुकः ॥३११॥
अहमित्यस्य प्रक्षेपः स्फुटीभूतेदमात्मनि ।
यत्रैश्वरो विमर्शः सः सामानाधिकरण्यतः ॥३१२॥
ग्राह्यग्राहककरूपे तु भिन्नाधिकरणात्मनि ।
विमर्शौ पृथगेवास्तस्तौ च मायाप्रमातरि ॥३१३॥

यच्च विश्वस्य चैतन्यसामर्थ्यं तत्त्वमैश्वरम् ।
बाह्यत्वस्फुटताकारि तदुन्मेषपदाभिधम् ॥३१४॥
एवं निमेषशब्देन यच्चान्तारूपमस्फुटम् ।
उत्तिष्ठतीव तत्प्रोक्तं तत्त्वं सदाशिवात्मकम् ॥३१५॥
इत्येतदुभयं तत्त्वं चित्तत्त्वस्याचलस्य वै ।
चलनाभासनेनेषच्चलनात्मकमेव हि ॥३१६॥
शुद्धस्पन्द इति ख्यातं स्पन्दः कुत्रापि प्रोच्यते ।
गुणादिस्पन्दनिष्पन्दाः सामान्यस्पन्दसंश्रयात् ॥३१७॥
लब्धात्मलाभा इत्यत्र स्पन्दशास्त्रे महात्मना ।
गुरुणा वसुगुप्तेन सामान्यस्पन्द उच्यते ॥३१८॥
इति सर्वाणि तत्त्वानि स्पन्दो भागवतो यतः ।
शक्तिश्च शक्तिमांश्चापि द्वे तत्त्वे समवस्थिते ॥३१९॥
शक्तयोऽस्य जगत्कृत्स्नं शक्तिमांश्च महेश्वरः ।
इत्यागमेन सुस्पष्टमेषोऽर्थः प्रतिपादितः ॥३२०॥
इत्थमीश्वरसादाख्यतत्त्वद्वयस्वरूपकम् ।
तत्त्वं समस्तमेवेदं शिवतत्त्वमिति स्फुटम् ॥३२१॥

ननु विश्वे निमिषितेऽहन्तैवैकरसाघना ।
शिष्टा सा शिवता वाच्या का सदा शिवतोच्यते ॥३२२॥
तस्मादुन्मेषरूपस्य भिन्नतास्तु कथञ्चन ।
निमेषो व्यतिरेकेण निर्दिष्टस्तु प्रभोः कथम् ॥३२३॥
शृणु विश्वनिमेषोऽयमिदन्तास्पर्श एव हि ।
किञ्चिद्रूपं त्वया वाच्यं नाशो नास्त्येव वस्तुनः ॥३२४॥
न च विश्वं शिवपदे परमाक्षरविग्रहे ।
इत्युक्तं प्रत्यभिज्ञायां तथैवास्त्यागमोऽप्ययम् ॥३२५॥
स्वभावेनैव शान्तात्मा घोरः संसार एव हि ।
स यस्मान्नेष्यते पत्युरघोर हृदयस्ततः ॥३२६॥
ईश्वरप्रत्यभिज्ञाया अधिकारेऽन्तिमेऽप्यदः ।
महामहेश्वराचार्यो गुप्तोऽभिनव उक्तवान् ॥३२७॥
न प्रमेयकथा काचिदस्ति श्रीपरमेश्वरे ।
तत्त्वौघः सर्वथा तत्र लीनश्चिद्रूपतां श्रितः ॥३२८॥
सेयं संवित्स्वभावेन स्वात्मविश्रान्तिलक्षणा ।
नैसर्गिकपरामर्शरूपस्वात्मचमत्कृतिः ॥३२९॥
चिदानन्दघनावस्था परमाक्षरविग्रहा ।
अनुत्तरस्वरूपस्य ज्ञेया विश्वमयस्य च ॥३३०॥

पूर्णाहम्भावनिष्ठस्य योगिनोऽपि शिवात्मनः ।
च्युतप्रमेयवृत्तान्ता सर्वोत्तीर्णा दशात्वियम् ॥३३१॥
प्रोन्मीलितं तु करणं विकल्पे वाऽविकल्पके ।
तत्र प्रमेयवृत्तान्तोऽस्ति न यत्र निमीलितम् ॥३३२॥
अतोऽन्तरित्यहन्तायां स्थिता ध्यामलतेव या ।
सा विपरिवर्त्तमाना निमेष इति कथ्यते ॥३३३॥
न तदा व्यवहारस्य योग्यता विश्ववर्त्तिनी ।
सदाशिवदशायां हि वेद्यानाऽनेकवर्त्तिनः ॥३३४॥
यतोऽसाधारणतया प्रत्येकं निजसंविदा ।
गृह्णन्ति वेदका वेद्यान् व्यवहारपदच्युतान् ॥३३५॥
सर्वंवेद्या व्यवहारपदस्था विषया मताः ।
प्रलीना ध्यामलाः प्रोक्ता एकबुद्धिस्थिताश्च ये ॥३३६॥
तत्सामानाधिकरण्यप्रथैवाहमिदं ननु ।
सदाशिवपदं ज्ञेयं यत्रास्फुटमिदं जगत् ॥३३७॥
या चेदन्तेश्वरस्थित्यां स्फुटत्वेन विभासिता ।
सम्पद्यतेऽस्फुटा सात्र परा शान्त्युपलक्षिता ॥३३८॥
अतोऽत्र वेद्ययोगेऽपि शिवतोन्मज्जनस्थितौ ।
सदाशिवत्वमित्युक्तं कलनाऽत्र न भेदगा ॥३३९॥

ग्राह्यग्राहकरूपाणां भावानाम्प्रलयश्च सा ।
अत्र मायीयरूपाणाम्प्रध्वंसः सर्वथा मतः ॥३४०॥
अतोऽव्यवहरणीयत्वाद्धेतोरेव तदोच्यते ।
विश्वं प्रलीनमिति न सर्वथाऽसत्त्वतः पुनः ॥३४१॥
मायातत्त्वे तु भूतानि स्थाप्यन्ते प्रलये पुनः ।
प्रभुशक्तिस्वरूपं तत् संस्पृश्येदं सदाशिवे ॥३४२॥
विश्राम्यन्त्यत एवायं निमेषोऽस्ति सदा शिवः ।
इति युक्ता निमेषस्योक्ता सदाशिवतात्मता ॥३४३॥
सृष्टेरस्फुटता यास्ति सा सदाशिवता मता ।
अतः सृष्टिप्रलययोः कोटचोराद्यन्तयोः स्थिता ॥३४४॥
सर्गद्वयोऽपि स एष केवलं परमाद्भुतम् ।
तस्यैवानुत्तराख्यस्य शूलिनः शक्तिजृम्भणम् ॥३४५॥
अतः सा शक्तिरेवैका ज्ञानशक्तिर्निगद्यते ।
यदाऽन्तर्भासमानेन स्वभावेनास्ति जृम्भिता ॥३४६॥
बहिर्भावस्वरूपेण क्रमोपबृंहितेन च ।
उक्ता विमर्शदार्ढ्येन क्रिया सैवेश्वरात्मिका ॥३४७॥
शिवस्य बहिरौन्मुख्यं व्यापारः शक्तिरुच्यते ।
विद्या तथैव व्यापारः सादाख्येश्वरयोरपि ॥३४८॥

विद्यानाम च तत्तत्त्वं सदाशिवेश्वरोभयोः ।
यः स्वरूपादभिन्नत्वपरामर्शो हि विद्यते ॥३४९॥
सामानाधिकरण्यं हि सद्विद्याऽहमिदंधियोः ।
नात्राधिकरणं किन्तु तृतीयं सम्भवेत् परम् ॥३५०॥
इदमाऽऽमृश्यमानानां वेद्यानां बोधसारता ।
योचिताऽऽमृश्यते सात्र तस्माच्छुद्धेति गीयते ॥३५१॥
अपरत्वमपूर्णत्वमन्याकाङ्क्षित्वमेव यत् ।
इदमित्युच्यते तत्तु पूर्णत्वमहमित्यदः ॥३५२॥
तत्त्वद्वयेऽपि तावंशौ स्त एवेति विनिश्चितम् ।
पुरैवाऽतोऽस्ति विद्येयं शक्तिरेव तयोर्द्वयोः ॥३५३॥
तत्र तत्त्वस्वरूपं तु वेद्यभावस्थिता दशा ।
या तद्भासकसंशुद्धवेत्तृवेद्यार्थसाधना ॥३५४॥
तद्वेद्यनिष्ठसंवित्तिदशा विद्या सती च सा ।
अत्र सन्ति प्रमातारो महामन्त्रेश्वरादयः ॥३५५॥
हृदये प्रत्यभिज्ञायाः क्षेमेण कथितं त्विदम् ।
तत्त्वे सदाशिवे सन्ति स्थिता मन्त्रमहेश्वराः ॥३५६॥
मन्त्रेश्वराः स्थितास्तत्त्व ईश्वरे तदधिष्ठिताः ।
विद्यातत्त्वे स्थिता मन्त्रा मातारो भेददर्शिनः ॥३५७॥

आस्तामेतद् भगवतः शक्तिः स्वातन्त्र्यलक्षणा ।
एकैव कृत्यभेदेन बहुधा सोपचर्यते ॥३५८॥
यथाऽस्फुटस्फुटेदन्ताप्रकाशनपरा सती ।
ज्ञानक्रियात्मिका सैव प्रोक्ता सदाशिवेशता ॥३५९॥
चिन्मात्रग्राहकत्वेऽपि रूढेदन्ताप्रकाशिका ।
महामाया क्रियाशक्तिशेषरूपापि कथ्यते ॥३६०॥
विपर्यासः पुनर्यत्र ग्राह्यग्राहकयोरपि ।
माया सैव पुनस्तत्र भिन्नेषु पशुमातृषु ॥३६१॥
विपर्यासस्य संस्कारे स्थितेऽपि ज्ञानियोगिनोः ।
ऐश्वर्यात्मस्वभावस्य सद्विद्या ख्यापिका मता ॥३६२॥
इत्थमुत्पलदेवेन सद्विद्यामतभेदतः ।
वर्णिता तत्र गुप्तेनान्तिमास्येति विनिश्चितम् ॥३६३॥

कालतत्त्वसमुन्मेषा—न्मायीये सक्रमात्मता ।
किन्त्वमायीयविद्यान्ते—शुद्धसर्गे क्रमः कथम् ॥३६४॥
इति चेत् सत्यमेवैतत् किन्त्वत्रापेक्षिकः क्रमः ।
उपदेश्याः प्रमातारो मायीया द्वैतशालिनः ॥३६५॥

सदाशिवपदेऽवश्यं सन्तीदन्ताविभासिनः ।
तानपेक्ष्य भवत्येव क्रमः किन्तु न सः स्फुटः ॥३६६॥
अप्ररूढ़स्तदा तत्र प्ररूढ़ो मायिकेऽध्वनि ।
अतश्चौन्मुख्यरूपायाः शक्तेरानन्दवर्ष्मणः ॥३६७॥
प्राथम्यं तुटिशब्देन सोमानन्देन भाषितम् ।
"यदा तु तस्य चिद्धर्म-विभवामोदजृम्भया ॥३६८॥
विचित्ररचनानाना-कार्यसृष्टिप्रवर्त्तने ।
भवत्युन्मुखता चित्ता सेच्छायाः प्रथमा तुटिः" ॥३६९॥
शिवदृष्टावतः शुद्धसर्गे क्रमकथोचिता ।
अशुद्धाध्वविधाता यस्त्वाद्यो मन्त्रमहेश्वरः ॥३७०॥
सोऽघोरेश इति ख्यातः कथ्यतेऽनन्त इत्यपि ।
ईश्वरेच्छावशादेव यदाणोर्भोगलालसा ॥३७१॥
लोलिकामलसंयुक्तपुद्गलस्य विजृम्भते ।
तदायं मन्त्रराण् मायां संक्षोभ्य च कलादितः ॥३७२॥
धरान्तं तत्वसंघातं सृजतीव विभासितम् ।
भेदावभासजननी शक्तिरव्यतिरेकिणी ॥३७३॥
माया प्रभोर्यया देवो भेदमुल्लासयत्यपि ।

भेदावभासकरणा–दुपचारादियं पुनः ॥३७४॥
प्रोच्यते शिवशास्त्रेषु भेदावभास इत्यपि ।
आद्योभेदावभासो यो विभागमनुपेयिवान् ॥३७५॥
गर्भीकृतानन्तभावविभागा सा परानिशा ।
जडेयं भेदरूपत्वात् कार्यस्यापि जडत्वतः ॥३७६॥
सूक्ष्मा सर्वजनावेद्या व्यापिनी विश्वकारिणी ।
शिवशक्त्यविनाभावान्नित्यैका मूलकारणम् ॥३७७॥
माया मूलोऽपि मलोऽनादिरेव यतः स्थितः ।
अत एव पशुर्नित्यो ह्यमूर्तोऽज्ञ इति स्मृतः ॥३७८॥
किरणोक्तो विमर्शिन्यामर्थोऽयं प्रकटीकृतः ।
स्वच्छन्दे क्षेमराजेन जीवस्यानित्यता तु या ॥३७९॥
प्रोक्ता सृष्टिप्रकरणे संसारासत्त्वहेतुतः ।
अनादाविह संसारे कल्पे कल्पेऽपिचेद्यदि ॥३८०॥
एकैकस्य भवेन्मुक्तिरद्य सृष्टिर्न सम्भवेत् ।
सा न युक्ता यतः सृष्टिस्थितिध्वंसक्रमोऽप्ययम् ॥३८१॥
नित्यएव विनोदाय प्रभोर्भाति स्वशक्तिगः ।
सदा सृष्टिविनोदाय सदा स्थितिसुखासिने ॥३८२॥
सदा त्रिभुवनाहारतृप्ताय स्वामिने नमः ।

ननु माया महेशस्य शक्तिरव्यतिरेकिणी ॥३८३॥
यदा तदा कथमसौ भिन्नतत्त्वस्वरूपिणी ।
यद्यप्येतानि तत्त्वानि सर्वाणि परमार्थतः ॥३८४॥
शिवशक्तिमयान्येव धरान्तानि तथापि च ।
भिन्नत्वभासनादेव मायादावीश्वरेच्छया ॥३८५॥
कार्यत्वं च प्रकाश्यत्वं पृथक् तत्त्वत्वमेव च ।
मायया भास्यते तस्मान् मायोपादानतापि च ॥३८६॥
मायाकार्येऽपि तत्त्वौघे कार्यकारणता मिथः ।
उपादानं क्वचिन्माया क्वचित्तत्कार्यमेव हि ॥३८७॥

मायातस्तु कला जाता कलातस्तत्त्वविस्तरः ।
किञ्चित्कर्तृत्वरूपायाः कलायास्तु निशा यथा ॥३८८॥
जन्मदास्ति तथैवास्ति कला विद्यादिजन्मदा ।
किञ्चित्कर्तृत्वमाधातुं शक्ता शक्तिः कलोच्यते ॥३८९॥
किञ्चिद्वेदनरूपात्र शक्तिर्विद्येति भण्यते ।
भोक्तृत्वाधायकं तत्र विद्याद्युत्पादनक्रमात् ॥३९०॥
कर्तृत्वं तद् विशेष्यांशो भोग्यं किञ्चिद् विशेषणम् ।

विद्यारागोऽथ नियतिः कालश्चैतच्चतुष्टयम् ॥३९१॥
कलाकार्यमिति प्रोक्तं क्रमस्त्वत्राव्यवस्थितः।
रागतत्त्वं पुंसि लग्नं न पृथग्गणितं क्वचित् ॥३९२॥
त्रिंशिकायां यथा कालो नियतिश्चापि न पृथक्।
रागविद्ये कला तत्त्वाद् द्वे तत्त्वे सम्बभूवतुः ॥३९३॥
अव्यक्तं च तत इति श्रीरुरौ परिकीर्तितम्।
रज्यमानः क्वचिद् वेत्ति विदन् कुत्रापि रज्यते ॥३९४॥
इत्यतः क्रमबन्ध्यैव सृष्टिर्ज्ञेया तु वस्तुतः।
भोक्तृभोग्यात्मता यस्मादवियुक्ता परस्परम् ॥३९५॥
सममेव कला, तस्मादुभे ते च प्रसूयते।
मूर्च्छितप्रायतां माया कला किञ्चिच्च कर्त्तृताम् ॥३९६॥
विदधातीत्युभे भिन्ने कार्यभेदाद् व्यवस्थिते।
कार्यस्यैव विभिन्नत्वाद् भिन्नान्यनुमितानि वै ॥३९७॥
तत्त्वानि ह्यन्यथा न स्यान्मायाभिन्नस्य तत्त्वता।
इदानीमिदमेवाहं जानामि च करोमि च ॥३९८॥
विमर्शोऽयं प्रमातुः स्यान्न प्रमेयस्य तेन हि।
कलाकार्यमिदं सर्वं भोक्तृत्वपरिपूरकम् ॥४९९॥
भोग्यरूपं प्रधानं यत् तद्विशेषणजं स्फुटम्।

माया कला रागविद्ये कालो नियतिरेव च ॥४००॥
कञ्चुकानि षडुक्तानि नोक्तान्यन्यत्र यानि वै ।
तण्डुलस्येव पुंसोऽपि कम्बुकमिव कञ्चुकम् ॥४०१॥
परमावरणं भिन्नं भिन्नान्तःकरणादिवत् ।
सूक्ष्ममावरणं सूक्ष्मदेहारम्भकमेव यत् ॥४०२॥
तन्मात्रान्तं प्रकृत्यादि तुषवत्तद् व्यवस्थितम् ।
स्थूलमावरणं स्थूलदेहारम्भकमस्ति यत् ॥४०३॥
किंशारुकमिव स्थूलं तदेतद् भूतपञ्चकम् ।

व्यामोहकारिणी माया शक्तिः स्वस्य शिवस्य मे ॥४०४॥
स्वस्वभावं तया हित्वा प्रत्ययोद्भवरूपया ।
सर्वकर्त्तृत्वमाच्छिद्य हित्वा सर्वज्ञतामपि ॥४०५॥
किञ्चित्कर्त्तृत्वमासाद्य कलया विद्यया पुनः ।
किञ्चिज्ज्ञत्वसमापन्नः कलाविद्यासमावृतः ॥४०६॥
अपरिच्छिन्नतारूपं स्वधर्ममपरामृशन् ।
किन्तु तद् विपरीतेनावच्छेदनविधायिना ॥४०७॥
भूतादिप्रविभक्तेन कालेनापि परिच्छिदन् ।

कार्यंकारणनैयत्यकारिण्या .. .. कार्यंमण्डले ॥४०८॥
सर्वात्मकत्वविस्मृत्या नियत्यापि निबन्धयन् ।
प्रेप्सितार्थस्य विरहान्नित्या याऽनभिलाषिता ॥४०९॥
हिंसंस्तामभिलाषित्वरूपरागेण रञ्जयन् ।
कञ्चुकाख्येन षट्केन पाशितः सन् पशुः स्वयम् ॥४१०॥
भवन् क्रीडामि शक्त्यैव स्वीयया स्वेच्छयाऽनया ।

समलोऽपि शक्तिपातेन नाहं कर्त्तेति भावयन् ॥४११॥
विज्ञानाकलतामेति प्रदिध्वंसिषयन् मलम् ।
भोग्यत्वेनाभिमनुते फलमात्मनि संकुचन् ॥४१२॥
संकुचित एव भुङ्क्ते फलं चापि शुभाशुभम् ।
स्वातन्त्र्यात् कर्त्तृतारूपात् कर्मदृष्टं क्रियात्मकम् ॥४१३॥
न मलादिति मलेऽपि कर्म ज्ञानाकले नहि ।
कर्मणः फलदातृत्वसंस्कारस्य वियोगतः ॥४१४॥
सत्यपि स्मृतिसंस्कारे न कर्म फलदं भवेत् ।
अहो संस्कारमाहात्म्यं कीदृशं दृश्यतामिदम् ॥४१५॥

भुङ्क्ते यज्ञफलं स्वर्गं यजमानो न याजकः ।
अपि दुष्कृतिकर्मापि प्रायश्चित्तेन शुद्ध्यति ॥४१६॥

अतोऽभिमान एवायं कर्मजोऽपूर्वसंज्ञकः ।
किञ्चित्कर्त्तृत्वदातृत्वात् कला पुंसः प्रयोजिका ॥४१७॥

अतः कलासमाश्लिष्टो भोगेऽणुः कर्त्तृकारकः ।
अनयोरन्तरं सूक्ष्मं यदा पुंस्कलयोः पुनः ॥४१८॥

अयं पुमानियं चापि कला दोषालया शुभा ।
इतिज्ञानं भवेज्ज्ञानचक्षुषानन्तशक्तितः ॥४१९॥

तदाप्याप्नोति पुरुषो विज्ञानाकलतां पुनः ।
ययानाधः प्रसरति मायातस्तु शिवेच्छया ॥४२०॥

क्रमतोऽक्रमतो वापि स्याच्छिवोऽपि त्यजन् मलम् ।
प्रकृतेः पुरुषस्यापि विवेके सांख्यशास्त्रतः ॥४२१॥

सिद्धे यथा प्रधानाधो न गच्छत्यचलः पुमान् ।
बुद्धौ या प्रतिसंक्रान्ता चिच्छाया तत्र वृत्तितः ॥४२२॥

यत्कर्त्तृत्वाभिमननं सोऽविवेको मतः पुनः ।
विवेको विषयव्रातवृत्तिच्छायातिरस्कृतेः ॥४२३॥

स्थिरदीपशिखाप्रख्यचितोऽकर्त्तृत्वभावनम् ।
अपूर्णत्वाभिमननं मलमाणव संज्ञकम् ॥४२४॥

स्वातन्त्र्यहानिरूपं तत् स्वातन्त्र्याज्ञानमित्यपि ।
अहमित्यवभासात्मा स्वात्मविश्रान्तिलक्षणः ॥४२५॥
निजानन्दचमत्कारः स्वस्वभावः प्रकीर्तितः ।
अयमुत्तमकर्तृत्वं प्रत्यभिज्ञाकृतां मते ॥४२६॥
शुद्धबोधस्वरूपस्य स्वातन्त्र्यं चेदमुच्यते ।
हानिस्तस्य मलं प्रोक्तं विज्ञानाकलसंस्थितम् ॥४२७॥
आणवं चाभिलाषाख्यं स्वस्वरूपापहानितः ।
दुर्घटं स्वस्वभावस्य मुख्यस्यास्ति वियोजनम् ॥४२८॥
किन्तु तत्रापि सामर्थ्यं स्वातन्त्र्यस्य प्रदर्शयन् ।
केवलं बोधमात्रात्माहं भासेऽन्योन्यभेदतः ॥४२९॥
इतीच्छन् समलो भूत्वा पूर्णत्वं विजहत् स्वयम् ।
स्वीकरोति मलं देवो विज्ञानाकलतां दधत् ॥४३०॥
स्वेच्छयैव यदा स्वस्मिन् स्वातन्त्र्यं स्वस्य भाति न ।
तदंशस्य विनाशेन तदाणुत्वमपूर्णता ॥४३१॥
शुद्धबोधत्वसत्त्वेऽपि स्वातन्त्र्यांशाप्रकाशनात् ।
ईश्वरेच्छाकृता भान्ति भिन्ना विज्ञानकेवलाः ॥४३२॥
शुद्धबोधात्मकत्वेऽपि येषां नोत्तमकर्तृताः ।
निर्मिताः स्वात्मनो भिन्ना भर्त्रा ते कर्तृतात्ययात् ॥४३३॥

बोधादिलक्षणैक्येऽपि येषामन्योऽन्यभिन्नता ।
तथेश्वरेच्छाभेदेन तेच विज्ञानकेवलाः ॥४३४॥
इति श्रीप्रत्यभिज्ञायामुत्पलेनोपपादितम् ।
तथागमे शिवेनापि वक्ष्यमाणं विनिश्चितम् ॥४३५॥
स सिसृक्षुर्जगत् सृष्टेरादावेव निजेच्छया ।
विज्ञानकेवलानष्टौ बोधयामास पुग्दलान् ॥४३६॥
स्वमयं कल्पिताकारं कल्पितात्मककर्मभिः ।
आत्मानं प्रतिबध्नाति स्वातन्त्र्यादिति निश्चयः ॥४३७॥
अणुरूपोऽप्ययं पूर्णं शुद्धं रूपं स्पृशत्यहो ।
परावृत्त्येति महिमा स्वातन्त्र्यस्यास्य दृश्यताम् ॥४३८॥
इतीदृशस्वभावोऽयमेकोऽपि बहुधात्मना ।
सम्पन्नः सर्वदा भाति स्वभावेकानुयोज्यता ॥४३९॥
एतादृशप्रथैवास्ति स्वभावोऽस्य स्वभावतः ।
अतः शंका समाध्वस्ता स्वभावे नानुयोज्यता ॥४४०॥
स्वस्य स्वात्मतिरोधित्सा कारणं मलकर्मणोः ।
तेनानादिव्यवस्थेयं स्वभावात् संप्रवर्त्तते ॥४४१॥
प्रकाशात्मा स्वतन्त्रोऽयं चिद्रूपो नर्तकः शिवः ।
स्वभावात् स्वस्वरूपस्य प्रच्छादनपरायणः ॥४४२॥

दृक्क्रियापरिपूर्णोऽयमेक एवाप्यनेकक: ।
संवृत्तोऽणुः समाच्छाद्य स्वस्वरूपं स्वभावत: ॥४४३॥
अपूर्णंमन्यतैवेयं साकाङ्क्षत्वमिवात्मनि ।
लोलिकाख्यं मलं नाम स्वस्वरूपापहानिजम् ॥४४४॥

मलस्यास्य तु नामानि शास्त्रेऽनेकानि योगत: ।
प्रोक्तानि तानि गण्यन्ते मया शास्त्रानुसारत: ॥४४५॥
मलोऽभिलाषश्चाज्ञानमविद्या लोलिका प्रथा ।
भवदोषोऽनुप्लवश्च ग्लानि: शोषो विमूढ़ता ॥४४६॥
अहं ममात्मताताङ्को माया शक्तिरथावृति: ।
दोषबीजं पशुत्वं च संसाराङ्कुरकारणम् ॥४४७॥
इत्याद्यन्वर्थसंज्ञाभिस्तत्र तत्र प्रकीर्त्तितम् ।
स्वरूपं गोपयन्तीयं माया भेदं शिवात्पशो: ॥४४८॥
दर्शयन्ती सुषुप्तत्वमिवाधत्ते पशौ मलम् ।
आणवं मलमख्यातिरस्तु किन्त्वभिलाषिता ॥४४९॥
गुप्तस्य कर्तुंर्नो युक्ता चैष्टव्यस्याप्यभावत: ।
इति नैव त्वया वाच्यं मर्मस्थानमिदं ननु ॥४५०॥

वच्मि तत्सावधानेन भवताप्यवधार्यताम् ।
पूर्णस्यापूर्णताभानं तिरोधिः समुदाहृता ॥४५१॥
सैव भिन्नेन भावेन पूर्त्तिं प्रति स्पृहा मता ।
स्वभिन्नोन्मुखतैवेयं लोलिकाख्याभिलाषिता ॥४५२॥
तेन स्वरूपस्वातन्त्र्यमात्रं मलविजृम्भणम् ।
मलादीनाञ्च केषाञ्चित् संविद्विश्रान्तिमन्तरा ॥४५३॥
नोपपन्ना यतः सत्ताऽतोऽत्र हेतुर्महेश्वरः ।
इति सृष्टौ मलं कर्म मायाञ्चापेक्ष्य वर्त्तते ॥४५४॥
शिवेच्छैवेति संसिद्धं सिद्धान्तं परमामृतम् ।
अतः सृष्ट्यादिकृत्येऽस्ति मलादेरप्यपेक्षणम् ॥४५५॥
निग्रहेऽनुग्रहे किन्तु नापेक्षा मलकर्मणोः ।
शक्तिपातः शिवे भक्तिर्नवधा सा भवत्यथ ॥४५६॥
परमः शक्तिपातोऽसौ परिपूर्णचिदात्मता ।
ध्वस्तोपाध्यनवच्छिन्नसंविदेकस्वभावता ॥४५७॥
भोगांशेन समाश्लिष्टः प्रकाशः परमः स यः ।
अपरः शक्तिपातः स पर्यन्ते शिवताप्रदः ॥४५८॥
कलाद्यमूनि तत्त्वानि शुद्धान्येव हि तान्प्रति ।
ये श्रीगुरुकृपादृष्ट्या शक्तिपातपवित्रिताः ॥४५९॥

तेषां कलादयः शुद्धाः शुद्धकर्माणि तन्वते ।
तथाभूतानि यैस्तेऽपि भविनो यान्ति मुक्तताम् ॥४६०॥
इत्थमिच्छात्मिकैवेयं लोलिकाख्याभिलाषिता ।
अपूर्णंमन्यताऽज्ञानं संकुचितप्रथात्मकम् ॥४६१॥
मलेऽवच्छेदकत्वं न किन्त्ववच्छेदयोग्यता ।
तेन नास्य पृथक् तत्त्वभावः कुत्रापि स्वीकृतः ॥४६२॥
व्यतिरिक्तं स्वतन्त्रं तु प्रकाशान्नहि किञ्चन ।
शिवशक्तिमयं विश्वं तथापि व्यतिरिक्तता ॥४६३॥
इच्छामात्रस्वभावेयं निष्कर्मा याभिलाषिता ।
न सा नियतविषयाऽतोऽवच्छेदविवर्जिता ॥४६४॥
अपूर्णम्मन्यतैवातः साकाङ्क्षत्वमिवात्मनि ।
पूर्णज्ञानस्वरूपस्याख्यातिरज्ञानमुच्यते ॥४६५॥
इदं संकुचितज्ञानशब्देनाप्यभिधीयते ।
अणूनामणुतायाश्च योग्यतापीयमेव हि ॥४६६॥
अतोस्तत्तदवच्छेद—पात्रत्वमुदियादणोः ।
अपूर्णम्मन्यतापीयं तथारूपावभासनम् ॥४६७॥
आभासमात्रसारत्वाद् यथा सर्वे घटादयः ।
शिवादव्यतिरिक्ता वै व्यतिरिक्ता विभान्त्यपि ॥४६८॥

तथैवास्य मलस्यापि व्यतिरिक्तत्वमिष्यते ।
आगमे वर्णितत्वाच्च व्यतिरिक्तः स्थितो मलः ॥४६९॥
अनादिमलमेवेदं पशुत्वं परिकीर्त्तितम् ।
स्वेच्छयैवोद्गतं भाति स्वेच्छयैव विनश्यति ॥४७०॥
तादृशी कापि न शक्तिर्जडस्यास्य प्रसिद्धयति ।
बद्धाणुमथ मुक्ताणुं कुर्याद् भिन्नं यया पुनः ॥४७१॥
अतः स्वरूपस्वातन्त्र्यमात्रं मलविजृम्भणम् ।
इत्येतद् गुरुणा प्रोक्तं तन्त्रालोके सुविस्तरात् ॥४७२॥

वृत्ते स्वरूपसंकोच आणवेन मलेन वै ।
भिन्नस्य प्रथनं यत्तन्—मायीयमिति संज्ञितम् ॥४७३॥
अबोधरूपदेहादेः कर्त्तु भिन्नप्रथावतः ।
धर्माधर्मस्वरूपं च मलं कार्मं प्रकीर्त्तितम् ॥४७४॥
सुखदुःखादिजनकधर्माधर्मोभयोरपि ।
वासनैवोच्यते कार्मं मलं संसारकारणम् ॥४७५॥
शरीरभुवनाद्यात्मभिन्नताभासकारणम् ।
मायिकं मलमित्युक्तं संसारोऽप्ययमुच्यते ॥४७६॥

अस्य कार्ममलस्यापि मायान्ताध्वविसारिणः ।
प्रधानं कारणं प्रोक्तमज्ञानात्माणवो मलः ॥४७७॥
दैवमानुषतैरश्चभेदाद्वैचित्र्यशालिनः ।
चतुर्दशविधस्यापि कार्मं सर्गस्य कारणम् ॥४७८॥
माययान्धीकृतो भिन्नवेद्यं पश्यंस्तु पाशितः ।
स्वात्मनो भिन्नवेद्यानां दर्शनं पाश उच्यते ॥४७९॥
तेनैव जायते क्लेशोऽविद्यादिरपि पञ्चधा ।
वेद्यराशिवशादेव पशोः क्लेशाश्च पञ्च ते ॥४८०॥
भावाः स्वरूपतोऽभिन्नाः पत्युर्भान्ति सदैव हि ।
कर्माणि स्वात्मनो बन्धकराण्येव पशोः पुनः ॥४८१॥
मलेष्वेतेषु सर्वेषु मुख्यः कार्मो मतो यतः ।
न विनाऽमुं समर्थौ तौ देहाद्यभिनिवर्त्तने ॥४८२॥
अतः सांख्यपुराणादौ यत्नेनैवोपदिश्यते ।
कर्मबन्धाभिमानस्य हानिरेव पुनः पुनः ॥४८३॥
असंसरणसोपानपदबन्धो दृढीकृतः ।
तेन दीक्षाकृतो यस्य वृत्त एतदुपक्षयः ॥४८४॥

मलभेदकृताः सन्ति प्रमातारश्च सप्त ते।
शक्तिमन्तः प्रकथ्यन्ते पाञ्चदश्यादिकल्पने ॥४८५॥
शिवो मन्त्रमहेशश्च मन्त्रेश्वर इमे त्रयः।
मायैकमलसंयुक्ता भिन्नास्तत्तारतम्यतः ॥४८६॥
मलद्वयकृता भान्ति प्रमातारस्त्रयस्त्वमी।
मन्त्रविज्ञानकलनप्रलयाकलनामकाः ॥४८७॥
मन्त्रे मायाकृतो भेदः स विज्ञानाकले पुनः।
आणवेनोभयाभ्यां तु भेदो लयाकले पुनः ॥४८८॥
संस्काररूपः कर्मोऽपि मलोऽस्ति प्रलयाकले।
कार्याक्षमस्तदा तत्र सूक्ष्मत्वात्तदनादरः ॥४८९॥
मलैस्त्रिभिः समायुक्तः सकलः सप्तमो मतः।
भेदस्तत्र मलैरस्ति स्वीकृतोऽङ्गाङ्गितादिभिः ॥४९०॥
प्रमातॄणाञ्च निर्भज्य रूपं सम्प्रति कथ्यते।
येन विज्ञातमात्रेण सिद्ध्यत्येव तदात्मता ॥४९१॥
येषां चिन्मात्रमेवास्ति परमार्थो नत्वहं तु यत्।
स्वातन्त्र्यं परमानन्दं स्वात्मविश्रान्तिलक्षणम् ॥४९२॥
शुद्धस्वातन्त्र्यरूपायाः कर्तृताया अभावतः।
विज्ञानकेवला बोधस्वातन्त्र्यरहिता इमे ॥४९३॥

स्वातन्त्र्यहानिरूपांशाणवमलाञ्चिता इमे ।
मुक्ता वेदान्तसिद्धान्तब्रह्मभावगता इव ॥४९४॥

बोधात्मकं तु विज्ञानं स्वातन्त्र्यरहितं यतः ।
रूपमेषामतः प्रोक्ता इमे विज्ञानकेवलाः ॥४९५॥

शून्ये प्राणेऽथवा बुद्धौ जडेऽबोधात्मके त्वहम् ।
इत्युल्लासवतां येषां कर्तृत्वं प्रविजृम्भते ॥४९६॥

स्वातन्त्र्यस्याप्यबोधत्वमित्यंशेनाणवेन ते ।
आवृता अकलाः प्रोक्ताः कर्त्तारः प्रलयाकलाः ॥४९७॥

भिन्नवेद्यप्रथाप्येषां मायिकेन मलेन तु ।
सवेद्यरूपसौषुप्तपदे न त्वपवेद्यके ॥४९८॥

शून्यादिभागविश्रान्ता गाढनिद्रावशीकृताः ।
सन्त्यपवेद्यसौषुप्तपदे मायामलं विना ॥४९९॥

अवशिष्टसुखाद्यात्मभिन्नवेद्यप्रथाजुषः ।
बुद्ध्यादिभागविश्रान्ताः सवेद्ये सन्ति तत्पदे ॥५००॥

स्थूलदेहेन्द्रियाद्यात्म यत्कार्यकरणादिकम् ।
तद्वियोगस्वरूपत्वं प्रलयाकललक्षणम् ॥५०१॥

एतदस्त्युभयोरेवावस्थयोरेकरूपकम् ।
प्रलयेन कृतास्तावत् तथाभूता भवन्ति ते ॥५०२॥

यावन्न वासनारूपधर्माधर्मात्मको मलः ।
कार्मः पुनरुदेत्येव प्रलयान्ते समागते ॥५०३॥
आणवकार्ममलाभ्यां च हीना, मायामलान्विताः ।
सर्वज्ञाः सर्वकर्त्तारो मता विद्येश्वराश्च ते ॥५०४॥
संसारोत्तीर्णरूपत्वात् त्यक्तधर्मादिवासनाः ।
अहमित्युल्लसन्तश्च पश्यन्त्यात्मतया चितम् ॥५०५॥
किन्तु वेद्यतया ह्येषां कार्यत्वेनापि भाति च ।
यद्भिन्नं तनुकरणभुवनाद्यपि सत्तया ॥५०६॥
अतो भिन्नावभासत्वान्-मायैकमलताजुषः ।
सन्त्यनन्तादयः सर्वे विद्येश्वरपदाभिधाः ॥५०७॥
या वेद्यादपृथग्भूतरूपता पूर्णता मता ।
भाति सा तत्र नत्वत्र सदाशिवेश्वरोचिता ॥५०८॥

मलत्रयेण सम्बद्धा मायातत्त्वान्तरस्थिताः ।
देवादिस्थावरान्ता ये भविनस्ते द्विधा मताः ॥५०९॥
मलत्रयोद्भवतिरोभावभेदाद् विभेदितः ।
द्विधा भिन्नोऽस्ति सकलः पशुलामुक्ततायुतः ॥५१०॥

सर्वेषां त्रिदशादीनां संविद्भागस्य मज्जनात् ।
चिद्रूपस्य च तत्तत्वं स्वातन्त्र्यं न्यक्कृतं मलैः ॥५११॥

तदनुप्राणितं पश्चात् कलया कर्तृतामयम् ।
शून्यादिदेहपर्यन्तमायामातृषु संस्थितम् ॥५१२॥
इदन्तापन्नशून्यादिमितमातृस्थितत्वतः ।
मितं प्रमेयतापन्नमप्रधानतया स्थितम् ॥५१३॥
यो गौरो यः सुखी चायं बुभुक्षुर्वा पिपासितः ।
यः सर्वरूपरहितः शून्यः सोऽहमसंशयम् ॥५१४॥
इत्थमन्तर्विलीनाहं–भावेदन्तावगाहिनी ।
परिस्फुरति संसारावस्था संसारिणामियम् ॥५१५॥
जाग्रत्स्वप्नसुषुप्तात्मावस्था संसारिणामियम् ।
याभिः परिवृतो नित्यं सकलोऽयं पशुः स्मृतः ॥५१६॥
अहंभावेन तेनैव स्वातन्त्र्येण यदा पुनः ।
परामृशंश्च नित्यत्वपूर्णत्वाद्यपि चात्मनि ॥५१७॥
तस्मादुन्मज्ज्य शून्यादिमेयान्मातुश्चिदात्मनि ।
तिष्ठतीव तदा तस्य तुर्यातीता दशा भवेत् ॥५१८॥

यदा सिद्धरसेनेवाहंभावेनैव विध्यते ।
नित्यैश्वर्यादिसम्भिन्नस्वातन्त्र्येणापि योगिना ॥५१९॥
शून्यादिदेहधात्वन्तं तदा देहादिरप्यसौ ।
प्रमेयतां परित्यज्याध्यास्ते तुर्यंदशामिव ॥५२०॥
सेयं द्वय्यपि जीवानां मुक्तावस्थेति कथ्यते ।
समावेशोऽपि शास्त्रेऽस्मिन् सम्यगावेशनात्मकः ॥५२१॥
मय्यावेश्य मनो ये मामित्यादि भगवद्वचः ।
अस्यार्थस्यैव कुरुते व्यक्तिं वीरार्जुनं प्रति ॥५२२॥
यस्माच्चितस्तु मुख्यत्वं कर्तृताया विभाव्यते ।
तत एवच शून्यादेर्गुणीभावोऽपि ज्ञायते ॥५२३॥
अचिद्रूपे गुणीभूते स्वातन्त्र्यस्याप्यबोधता ।
इत्यासीद् यः पुरा मलव्यापारः सोऽपहस्तितः ॥५२४॥
अतो योऽप्यपरोऽप्यात्मभागो मलतिरस्कृतः ।
बोधात्मा सोऽधुनोन्मग्नो भाति मुख्यत्वमागतः ॥५२५॥
चिदात्मनो हि मुख्यत्वं समावेशस्य लक्षणम् ।
अज्ञानात्ममलद्वेषि ज्ञानमप्येतदुच्यते ॥५२६॥
समावेशदशापन्नो देहस्थः सकलोऽप्ययम् ।
मुक्त इत्युच्यते शास्त्रे पतिश्चापि भवत्यसौ ॥५२७॥

समावेशदशालाभतुष्टो ज्ञानीति कथ्यते ।
एतदभ्याससंप्राप्तैश्वर्यो योगी मतो हि नः ॥५२८॥
आणवेऽङ्कुरितप्रायं रागे मुकुलितं पुनः ।
बुद्धौ फुल्लश्च फलितं भातीदं विश्ववैभवम् ॥५२९॥
इत्थमिच्छात्मिकैवेयं लोलिकैव यदा पुनः ।
सामान्याकारविषया किञ्चिन्मे भवतादिति ॥५३०॥
तदा भवति पुंधर्मो राग: कञ्चुकमध्यगः ।
मायिकोऽप्यपरो योऽस्ति सांख्यशास्त्रसमीहितः ॥५३१॥
बुद्धिधर्मोऽभिधो रागः सोऽपीयं बहिरागता ।
तत्तद्विशेषविषयाऽध्यवसायपदाभिधा ॥५३२॥
किञ्चित्त्वस्य तु सर्वत्र सत्त्वेऽप्यत्रैव यत्पुनः ।
आसङ्गो रागतत्वं तत् पशोः कल्प्यं तु कञ्चुकम् ॥५३३॥
मायीयं यच्च कर्तृत्वं क्रिययाऽऽरूषितं पशोः ।
भावाभावावभासात्म क्रमरूपाच्च कालतः ॥५३४॥
करोम्यहं करिष्यामीत्याद्यात्मन्यवभासते ।
ततः कालपरिच्छिन्नकर्तृत्वप्रविभासकम् ॥५३५॥
कालतत्त्वमिदं प्रोक्तं कञ्चुकान्तर्गतं पुनः ।
अस्मात् कारणतश्चेदं कार्यं सिद्ध्यति नान्यतः ॥५३६॥

इत्येवं नियमयन्ती नियतिः कञ्चुकात्मिका ।
तुषकम्बुकसंकाशैः कञ्चुकैः परिवेष्टितः ॥५३७॥
उच्यते शिव एवात्र पुद्गलोऽणुः पुमानपि ।
कलाया योऽपरो भागो विशेषणतया स्थितः ॥५३८॥
किञ्चिदंशस्ततो जातं प्रधानं वेद्यमात्रकम् ।
परस्पराऽवियुक्तं सद् यत् सापेक्षमिव स्थितम् ॥५३९॥
भोक्तृभोग्यात्मकं द्वन्द्वं तत् कलैव प्रसूयते ।

यत्सामान्यात्मकं वेद्यरूपमव्यक्तसंज्ञकम् ॥५४०॥
गुणतत्त्वं तदेव स्यात् प्रधानं क्षुब्धतां गतम् ।
अक्षुब्धाच्च विजातीयं कार्यं यस्मान्न सम्भवेत् ॥५४१॥
ततः क्षुब्धत्वमापन्नं गुणतत्त्वान्तरं स्मृतम् ।
भुवनान्यपि भिन्नानि दर्शितान्यत्र चागमे ॥५४२॥
मालिनीविजये नास्ति गुणतत्त्वान्तरं त्विदम् ।
तन्त्रालोकेऽथ स्वच्छन्दे स्वशब्देनैव स्वीकृतम् ॥५४३॥
तत्र श्री. क्षेमराजेन प्रोक्तं जयरथेन च ।
गुणसाम्यस्वरूपायाः प्रकृतेर्न विलक्षणा ॥५४४॥

सत्त्वोत्कर्षात्मिका बुद्धिर्मध्ये यावन्न जायते ।
किञ्चिदुच्छूनतारूपं यथा बीजान्नवाङ्कुरः ॥५४५॥
अतः प्रकृतितत्त्वानतिभिन्नव्यपदेशभाक् ।
जायते गुणतत्त्वं तत् प्रकृतिं बुद्धिमन्तरा ॥५४६॥
किञ्चिदुच्छूनतापन्नबीजस्यापि यथैव हि ।
दृष्टा व्यवहृतिर्बीजशब्देनैव तथैव हि ॥५४७॥
सम्प्राप्तोच्छूनभावायाः प्रकृतेर्या गुणात्मता ।
सापि प्रकृतिनाम्नैव स्वीकृता यत्र तत्र नो ॥५४८॥
स्वीकृतं गुणतत्त्वं तु संक्षिप्तव्यवहारिणा ।
श्रीमद्भागवते प्रोक्तं श्रीकृष्णेनोद्धवं प्रति ॥५४९॥
अन्तर्भाव्य बहिर्भाव्य तत्त्वसंख्या विभेदिता ।
मुनिभिस्तेन संख्याया भ्रमस्त्याज्यः सुबुद्धिभिः ॥५५०॥
गुणेभ्यो बुद्धितत्त्वं तत् सर्वतो निर्मलं पुनः ।
जायते यत्र वेद्यस्य पुंसश्च प्रतिबिम्बनम् ॥५५१॥
वृत्त्यात्मास्य जडो बोधो यद्यप्यस्ति स्वभावतः ।
वेद्यावभासको जातो बोधात्मा पुंप्रकाशतः ॥५५२॥
विषयप्रतिबिम्बं तु बुद्धावक्षकृतं क्वचित् ।
स्वोपस्थापितमेवास्ति स्वप्नोत्प्रेक्षादिषु क्वचित् ॥५५३॥

करणत्वमिवास्त्येव बुद्धेः कारणतापि च ।
अतो बुद्धेरहंकारः प्रतिबिम्बात्मवस्तुनि ॥५५४॥
प्रकाशे वेद्यकलुषे जातोऽहं मननात्मकः ।
संरम्भरूपया वृत्त्याऽहंकारस्य प्रवर्त्तितः ॥५५५॥
वायुः प्राणादिरूपोऽयं जीवनाय प्रवर्त्तते ।
वायोरप्रेरणे मृत्युरिति शास्त्रे विनिश्चितम् ॥५५६॥
कृत्रिमोऽयमहंकारोऽस्तोऽहंकारः प्रकथ्यते ।
स्वातन्त्र्याहंस्वभावात्मा विशुद्धात्मा त्वहमुच्यते ॥५५७॥
इत्ययं करणस्कन्धोऽहंकारस्य निरूपितः ।
त्रिधास्य प्रकृतिस्कन्धः सात्त्वराजसतामसाः ॥५५८॥
बुद्धीन्द्रियाण्यहंकारात् सात्त्विकान्मनसा सह ।
श्रोत्रं त्वक्चक्षुषी जिह्वा प्रजायन्ते च नासिका ॥५५९॥
सर्वंतन्मात्रकर्त्तृत्वविशिष्टात्तु मनो यतः ।
नान्यवन्नियतग्राहि सर्वमेवावगाहते ॥५६०॥
अध्यवसायसंरम्भविकल्पा याः क्रियाः पृथक् ।
तत्रैषां करणत्वात्त्वन्तः करणमिदं त्रयम् ॥५६१॥
तत्तत्तन्मात्रहेतुत्वविशिष्टाहंकृतिर्यतः ।
तस्य तस्येन्द्रियस्यास्ति जनिकेतीन्द्रियं पुनः ॥५६२॥

चक्षुरादिस्वविषये नियते ह्येव वृत्तिमत् ।
वृत्तिरेषां तु पञ्चानामालोचनमिति स्मृतम् ॥५६३॥
राजसादप्यहंकाराज्जातमिन्द्रियपञ्चकम् ।
कर्मेन्द्रियं तद् वाक्पाणिपायूपस्थाङ्घ्रिनामकम् ॥५६४॥
तमःप्रधानाहंकाराद् भोक्त्रंशच्छादनात्मनः ।
भूतादि नाम्नस्तन्मात्रपञ्चकं भूतकारणम् ॥५६५॥
सात्त्विकस्तामसश्चायं निष्क्रियो न क्षमो यतः ।
स्वस्वकार्याभिजननेऽतो राजसमपेक्षते ॥५६६॥
यत् सामान्यं हि गन्धत्वं विचित्रे गन्धमण्डले ।
तत्तन्मात्रमिति प्रोक्तमित्थमेव रसादिषु ॥५६७॥
वाच्याध्याससहः शब्दो नभः सर्वावकाशदम् ।
शब्दतन्मात्रमेवातः क्षुभितं नभ इव स्थितम् ॥५६८॥
तदेव स्पर्शतन्मात्रयोगात् प्रक्षुभितं पुनः ।
वायुः क्षुब्धाम्बर इव शब्दस्पर्शोभयात्मकः ॥५६९॥
इमौ तु रूपेण समं प्रक्षुब्धौ त्रिगुणान्वितम् ।
तेजस्तानि सहरसैरापः स्युश्च चतुर्गुणाः ॥५७०॥
गन्धतन्मात्रसहिताः प्रक्षुब्धत्वसमाश्रिताः ।
इमाः शब्दादितन्मात्राः पृथ्वी पञ्चगुणान्विता ॥५७१॥

गन्धादिधर्मसंघातव्यतिरिक्ता न . काचन ।
भूर्विभातीति तन्मात्रमात्रं पृथ्व्यादि पञ्चकम् ॥५७२॥
नहि धर्मातिरिक्तोऽत्र धर्मी कश्चन विद्यते ।
षष्ठी प्रयोगोधीभेदाद् भेद्यभेदकतादि च ॥५७३॥

प्रतितत्त्वमनेकानि भुवनानि पुराणि वा ।
तदधिष्ठातृरुद्राश्च निग्रहानुग्रहेश्वराः ॥५७४॥
सन्ति नामानि तेषां तु स्वयं कल्प्यानि तानि वा ।
शास्त्रेषूक्तानि सन्त्येव कथ्यन्तेऽपि कियन्त्यपि ॥५७५॥
पृथ्वीतत्त्वात् समारभ्य गुणं यावत् पुराणि तु ।
मुख्यान्येव न गौणानि सप्ताधिकशतद्वयम् ॥५७६॥
अन्तर्बहिरधस्ताच्च भूमेरष्टोत्तरं शतम् ।
जलाद्याकाशतत्त्वेषु प्रत्येकं नव सन्ति च ॥५७७॥
तन्मात्रेषु च सन्त्यष्टाविन्द्रियेषु दशैव च ।
मनस्येकं चन्द्रमसोऽहंकारेषु नवैव च ॥५७८॥
बुद्धौ द्वात्रिंशदेव स्युर्गुणे पंक्तित्रयं पुनः ।
इत्थं जयरथेनोक्तं तन्त्रालोकाष्टमाह्निके ॥५७९॥

स्वच्छन्दे क्षेमराजेन चतुर्थे दशमेऽपि च ।
दीक्षामुद्दिश्य संक्षिप्तां पृथिव्यण्डस्थितानि तु ॥५८०॥
भुवनानि यथापूर्वमष्टोत्तरशतं पुनः ।
जलादिगुणतत्त्वान्ते सप्ताधिकशतद्वयम् ॥५८१॥
प्रोक्तानि तानि दर्श्यन्ते भुवनानि यथाक्रमम् ।
कुत्रचिद्भुवनानां वै तदीशानाञ्च कुत्रचित् ॥५८२॥
केवलं सन्ति नामानि शास्त्रे वच्म्यप्यहं तथा ।
ब्रह्माण्डान्तरधोभागे कालाग्निः कुष्महाटकौ ॥५८३॥
भूलोकेशः शिवो मध्ये सत्यान्तं ब्रह्मणः स्थितिः ।
स्वामिनौस्तस्तदुपरि विष्णुरुद्रौ स्वलोकयोः ॥५८४॥
इत्थं सप्तवह्नी, रुद्रशतं दिक्षु दशस्वपि ।
वीरभद्रस्तु सर्वेषां स्वामीत्यष्टोत्तरं शतम् ॥५८५॥
जलावरणरुद्रस्य धरित्र्या जलधेस्तथा ।
श्रियश्चापि सरस्वत्या एकैकं भुवनं ततः ॥५८६॥
अष्टौ गुह्याष्टकस्याथ शिवाग्नेरेकमेव हि ।
अतिगुह्याष्टकस्याष्टौ वाय्वीशस्यैकमेव हि ॥५८७॥
अष्टौ गुह्यातिगुह्याष्टकस्य सन्ति ततः परम् ।
खेश्वरस्यैकमष्टौ तु पवित्राद्यष्टकस्य च ॥५८८॥

तन्मात्रसूर्यशीतांशुवेदानामष्ट तानि वै ।
सूर्याचन्द्रमसोः पञ्च पुराणि करणात्मनोः ॥५८९॥
अहङ्कारपतेश्चैकमष्टौ स्थाण्वष्टकस्य च ।
द्वाषष्ठिर्भुवनानीत्थं बुद्धौ द्वाषष्ठिरेव हि ॥५९०॥
देवयोनेश्च क्रोधस्य तेजसो योगिनस्तथा ।
मूर्तेरस्त्यष्टकं तस्माच्चत्वारिंशद् भवन्ति च ॥५९१॥
श्रैकण्ठं पुनरौमञ्च द्वे स्तो योग्यष्टकोपरि ।
सुशिवद्वादशानाञ्च द्वादशैवाष्टकानि तु ॥५९२॥
महादेवाष्टकानाञ्च द्वाषष्ठिर्योजने कृते ।
त्र्यशीतिर्भुवनानाञ्च गुरुपंक्तित्रये ऽ्यतः ॥५९३॥
तामसी प्रथमा पंक्ती रुद्रैर्द्वात्रिंशता युता ।
राजसी त्रिंशता चैकविंशत्या चापि सात्त्विकी ॥५९४॥
अतो मेलनया सर्वंभुवनानि शतद्वयम् ।
सप्ताधिकं भवन्त्येवं ज्ञेयान्यग्रे यथागमम् ॥५९५॥
सर्वस्य तत्त्वस्य च तत्त्वभूतो-
गुरुः स एको नहि कोऽपि चान्यः ।
विभासमानोपि न भास्यते यो
गुप्तो गुरुः सोऽभिनवः सदास्ते ॥५९६॥

यथाऽऽमोदो न कर्पूरान्माधुर्य्यान्नहि शर्करा
भिद्यते न प्रभासूर्यान्न शिष्यो गुरुतस्तथा ।
गुरुशिष्यस्वरूपेण दृश्यते यद्यपि द्विधा
तथापि गुरुरेवैकः सर्वलक्षणलक्षितः ॥५९७॥

भूमिः सा मिथिला जयत्यतितरां भूत्यै जगज्जन्मिनां
तत्रैवास्ति "करेह" नाम तटिनी क्ष्मामूर्जयन्ती भृशम् ।
तत्तीरे कृतलक्षणोस्ति "पटसा" ग्रामो विदामाकरस्-
तत्रासीच्छिवभक्तिनिष्ठसुकलो नाम्ना "नृसिंहो" द्विजः ॥५९८॥
तस्माच्छ्रीयुत "राघवः" कलिमलास्पृष्टोऽपरोराघवो
जातो यस्त्रिभिरन्वितोऽनुजवरैः ख्यातिं कुलस्याकरोत् ।
तद्भ्राता निखिलैषणाविरहितः सद्ध्यानमग्नः सदाऽ
"योध्यानाथ" पदाह्वयोर्विजयते मज्जन्मदो योगिराट् ॥५९९॥
अस्य द्वावनुजौ स्मृतावपि हरौ क्लेशाब्धिभङ्गस्य यौ-
धूताज्ञानमलौ धरामुपगतौ देवौ दयालू इव ।
विद्याज्ञानपराङ्मुखान्निजजनान् सत्सोत्सिनी वंशजान्-
भारद्वाजकुलोद्भवान् कलयितुं कर्तुं च विद्योन्मुखान् ॥६००॥

नित्यानन्दाक्षयाकारौ "नित्यानन्दाक्षया" भिधौ ।
प्रणमामि महात्मानौ पितृव्यौ परमौ गुरू ॥६०१॥
मातरञ्च "रमां" वन्दे "काञ्चिनी"ञ्च पितामहीम् ।
ययोरद्यापि वात्सल्यं स्मरन् काञ्चित्स्थितिं भजे ॥६०२॥
प्रणमामि पुनः "सीतां" स्वसारं "सरयूं" पितुः ।
मातृवल्लालितो याभ्यां गतायां दिवि मातरि ॥६०३॥
"श्रीदामोदर"संज्ञकोऽस्ति गणको मान्यः सतां राघवि:-
तद्भ्राता बहुशास्त्रबुद्धिनिपुणः "श्रीरामदेवाभिधः" ।
वेणीनाटकटीकयास्य विदिता साहित्यमर्मज्ञता-
वादिध्वान्तनिवारणैक चतुरोऽयं सर्वशास्त्रेष्वपि ॥६०४॥
नित्याचाररतो महामृतयुतो विद्यालयस्थापको-
धर्मात्मा प्रियवाक् परापरसमो भक्त्या गुरून् ह्लादयन् ।
शास्त्रालोकनतत्परः सहृदयैश्छात्रैः सदा सेवितो-
नित्यानन्दसुतः सतामपिच सञ्छ्री"ब्रह्मदेवो"ऽभवत् ॥६०५॥
आसीत्प्राणपथैरवाप्तगिरिशो योगीश्वरो यो गुरुः-
तस्मादक्षयधामतः समभवच्छ्री"बालकृष्णो"मम ।
शिष्यो, ध्वान्तविनिर्गतो ह्यनुपमो योगीव वाचंयमी-
धीरो धर्मसखः स्वकर्मनिरतो विद्वान् मनस्वी महान् ॥६०८॥

साक्षरान् कृतवानस्मान् यौवने यो महामनाः ।
वृद्धत्वे भजमानोऽस्ति शिवं तं नौमि "कल्लरम्" ॥६०९॥
यो मां संस्कृत्य गायत्रीम्प्रायच्छज्झोपनामकः ।
"पञ्चानना"ख्यदायादं वन्दे तं ब्रह्मदं गुरुम् ॥६१०॥
प्रणमामि पुनर्भक्त्या गुरून् विद्याप्रदान् मुहुः-
सर्वतः प्रथमं तत्र रामदत्ताभिधं गुरुम् ।
मिश्रोपनामकाचार्यं निजग्रामनिवासिनम्-
विद्यानाथं मुक्तिनाथं रघुनाथं मनीषिणम् ॥६११॥
राधाकृष्णं सदानन्दमुग्रानन्दं महागुरुम् ।
सन्ति सर्वत्र यस्यास्य शिष्यशिष्या ह्यनेकशः ॥६१२॥
येन मित्रेण मित्रेण चक्षुरुन्मीलितं मम ।
व्याकृतौ बाल्यवस्थायां तमुपेन्द्रं स्मराम्यहम् ॥६१३॥
यो मे मित्रं गुरुश्चापि यस्याहञ्चापि तादृशः ।
सोऽस्ति "नारायणः सप्रे" वित्स्वामी हठयोगवित् ॥६१४॥
प्रियस्मृतिप्रसङ्गेऽस्मिन्नुमाकान्तो न विस्मृतः ।
स्मृतः सर्वक्षणे यस्मात्स्वस्वरूपतया स्थितः ॥६१५॥
ग्राम्नैकार्थितयैकदैशिकतया जात्या स्वभावेन च-
श्रीवीरेश्वरपुत्रपञ्चकवरो रामेश्वरो मत्सखा ।

काश्यां स्वात्ममहेश्वराप्तविभवः सौलभ्यमस्मादृशः-
कुर्वन्नैहिकसाधने विजयते देहस्य जीवो यथा ॥६१६॥
काश्मीराभिजनो"जवाहर"कृती यत्रास्ति कालेमहा-
मन्त्री भारतशासनस्य जनतास्वातन्त्र्यसंस्थापकः।
"राजेन्द्रश्च" विराजते पतिरसौ राष्ट्रस्य राष्ट्रप्रियः
तत्रेयं स्वयमुद्गता स्वरसतोऽभिज्ञापयन्ती जनान् ॥६१७॥
"श्रीरामेश्वरजोशि"ना सहगते काश्मीर देशं मयि-
भिक्षां याचितुमागतोऽस्मि भवता दातुं प्रतिज्ञायताम्।
इत्थं येन हठान्निगृह्य वचसा तन्त्रे नियुक्तोह्यहं-
तं श्रीदेवगिरिं स्मरामि सततं साक्षाच्छिवं शान्तिदम् ॥६१८॥
अथेतिसंस्पर्शविहीनतत्त्वे-
तदात्मके तत्प्रतिपादके च।
सदैकरूपेण विजृम्भमाणे-
प्रारम्भपर्यन्तकथा कथं स्यात् ॥६१९॥

पूर्णताप्रत्यभिज्ञेयं सर्वभावसुनिर्भरा।
मोक्षलक्ष्मीर्महालक्ष्मीराजलक्ष्मीरविप्रिया ॥१॥

दत्तको ब्रह्मदेवस्य पुत्रो रामेश्वरात्मजः।
अभिजानातु सर्वः स्वं रमानाथ इवा मुतः ॥२॥

वाञ्छन्तीस्वयमभ्युपागतवती यं भारती स्वोन्नति
भातं वेदपुराणशास्त्रसहितं ज्ञानञ्च यस्मिन्स्वतः।
यत्संविच्छविभिन्नभेदतिमिरा एतादृशाः स्मो वयं
तं नित्यं स्वगुरुं परापरमयं ह्यानन्दरूपं नुमः ॥३॥

इति

—रामेश्वरस्य

# हृदयम्

यद्यप्यागमनिगमयोः परम्परायामाचार्याणां ज्ञानवैलक्षण्यात् समुद्भूतानि विभिन्नानि दर्शनानि समवलोक्यन्ते, तथापि तेषु केषाञ्चित्तारतम्येनाभ्युदयमात्रस्य केषाञ्चिच्च निःश्रेयसमात्रस्य साधनत्वात् सकलाभ्युदयस्य पूर्णमोक्षस्य चामोघसाधनन्तन्त्रमस्तकं प्रत्यभिज्ञादर्शनमेवानुसृत्य स्वातन्त्र्यमनुभवन्तो जना यथाभिलाष सानन्दमेव निखिलाभ्युदयं मोक्षञ्चावाप्तुं शक्नुवन्तीत्यसंशय-मुद्घोषयन्ति सदा समासादितस्वकल्याणा विश्वकल्याणमात्राभिला-षिणो मनीषिणो महात्मानः।

यतो हि—यथा साक्षात्क्रियमाणो जगदात्मा सूर्यः प्रतिक्षणो-च्छलत्प्रकाश्यस्वभावो भासमानोऽस्ति, तथैव प्रतिक्षणोच्छलच्चैतन्य-शक्तिः स्वतंत्र-पूर्णानंदात्मा लौकिकालौकिकसमस्तावस्थाव्यवस्थापकः शिवात्मा स्वात्मैव प्रतिपदं प्रतिरूपञ्च निरन्तरं विभासमानोऽस्तीति प्रत्यभिज्ञायते संस्कृतान्तः करणेन जाग्रता जनेनानेनैव दर्शनेन। न हि कोऽपि कुत्रापि कदापि स्वस्मिन् स्वशक्तेरप्रकाशमनुभवति, प्रत्युत सर्व एव जनाः सर्वत्र सर्वदा स्वस्मिन् शक्तेः स्फुरणमेवानुभ-वन्तीति योग्यानुभवस्योपपादकत्वात्, समुपलभ्यमानानां समेषामद्वैतवादानामवस्थाभेदेन स्वस्मिन्नन्तर्भावकत्वात्, सिद्धत्वाच्च यथा-प्रतीतिव्यवहारमयमेव श्रेयान् शिवाद्वैतवादः स्वातन्त्र्याद्वैतवादो वा स्वातन्त्र्यानन्यप्रणयिनः प्राणिमात्रस्य सर्वथोपयोगी चेति सुस्पष्ट-म्पश्यन्ति विशुद्धाशया विज्ञानिनः।

वादस्यास्य पोषकत्वादागमशिरसः प्रत्यभिज्ञादर्शनस्य स्वं प्रतिपाद्यमुपोद्बलयतां विभिन्नप्रकारकाणां पुस्तकानां विज्ञतमैः सोमानन्दोत्पलदेवाभिनवगुप्ताद्याचार्यैर्निबद्धानां सत्त्वेऽप्यद्यत्वे न निवृत्ता बहुविधा जिज्ञासाः स्वसुतानां समीक्ष्य दयामय्या पुत्र-

वत्सलया जगज्जनन्या प्रेरितेन साक्षाच्छिवेन रामेश्वरात्मना पूर्णताप्रत्यभिज्ञानामकं साक्षात्कृष्णेन व्यासरूपेण गीताख्यमिव पुस्तकं प्रकाश्य सर्वथाऽनुगृहीता भक्तिशालिनस्तनयाः।

पुस्तकमिदं श्रद्धया भूयो भूयोऽधीत्य साधारणा अपि संस्कृतवाङ्मनसो जिज्ञासवो जना निरस्तसमस्तसंशयाः पूर्णतां प्रत्यभिजानन्तोऽवश्यं जीवनसाफल्यमनुभविष्यन्ति, तर्हि का कथा स्वपरगुणानुरागविशिष्टानां तादृशां जिज्ञासूनां महात्मनां विदुषाञ्च।

अत्र हि पुस्तके—आगमतात्पर्यार्थस्य शिवाद्वैतस्य सर्वथोपपादनद्वाराप्र तिश्रद्धालुजिज्ञासु पूर्णतां प्रत्यभिज्ञापयितुं शिव-शक्ति-परा-पश्यन्ती-विद्या-मायादितत्त्वानां विभिन्नप्रकारेणानेकत्र तथा प्रतिपादनमस्ति, यथा शीघ्रमेव तादृशा जिज्ञासवः सविश्वासन्तदध्ययनेन कञ्चिद्विलक्षणं चमत्कारमनुभवन्तः सर्वदा सर्वत्रानन्दात्मकसम्पूर्णविश्ववपुषं शिवमेवात्मत्वेन प्रत्यभिजानन्तो ध्रुवं कृतार्थतामनुभवन्ति।

किं बहुना—अनन्तकोटिब्रह्माण्डात्मकं शिवं, शिवात्मकं वाऽनन्तकोटिब्रह्माण्डमात्मत्वेनानुभवतामस्मदादीनां न किमपि पारतन्त्र्यं प्रतिभाति, प्रतिभासितपारतन्त्र्यादेरपि स्वातन्त्र्यावभासमात्रसारत्वात्। वयं हि स्वानुभवेऽहन्तया भासमानेऽस्मिन्नपरोक्षे वस्तुनि सर्वाधारे कदापि पारतन्त्र्यं नानुभवामोऽपि तु स्वातन्त्र्यमेव। सेयं स्वतन्त्रतैव हि प्रियतमा स्वानुभवधारा नित्यनिरतिशयप्रेमास्पदानन्दस्वरूपसंरक्षिका प्रसरति स्वसत्तावगमिका, किन्तु मायाविभासितेदन्ताच्छादितैव सा प्रतिभाति जाग्रदाद्यवस्थासु, तत एव सुखसाधनानां मध्ये विराजमाना अपि जगज्जीवा योगिनश्च विकलायन्ते गुणीभूतेदन्ताकाविच्छिन्नतादृशानुभवाय तमःप्रकाशन्यतरदेशीयाय शयनाय समाधये वा। तस्मादुत्थितानां हि सुखमहमासमि'त्यादिप्रतीतिरेवावगमयत्यविच्छिन्नतां तत्र स्वानुभवधाराया इत्यलं स्वसंवेद्यार्थप्रकाशनेन।

एवञ्च—जीवानां सर्वथाऽपेक्षितस्य स्वातन्त्र्याद्वैतवादस्य सर्वथाऽपेक्षितं जगता सामञ्जस्यं सर्वथोपपादयत् पुस्तकमिदं यदि सर्वत्र प्रचारितं स्यात्, स्यान्नूनं तर्हि विश्वे सकलैराकांक्षिता शान्तिः समुन्नतिश्च सर्वदिग्गामिनीति सुदृढं प्रतीमो वयम्।

अतएव शिक्षाजगत्सम्बद्धाः समे महानुभावाः सादरं निवेद्यन्ते प्रकृतपुस्तकमात्मसाद्विधातुम्, येनावश्यं पूर्णतां प्रत्यभिजानतान्तेषां तत्प्रियाणाञ्च समस्तं जीवनं सुखशान्तिमयं सम्पद्येत।

आशास्महे च–सर्वे विश्वकल्याणाभिकांक्षिणो नेतारो मन्त्रिणश्च विद्वांसो महाशया यथा स्थानावसरं पुस्तकमिदं समादृत्य कर्त्तव्यम्पालयन्तो ध्रुवं जनतामुपकरिष्यन्तीति।

ग्रन्थस्यास्य निर्मातारो भगवद्गीतोक्तसुदुर्लभजन्मतासूचितपुण्यातिशया विश्वगुरुभारतभाल-जानकीजनकयोगियाज्ञवल्क्य-गौतममण्डनवाचस्पतिजन्मभूमि-मिथिलामणयोऽप्रतिमप्रभाविभासितवैदुष्याः सर्वतन्त्रस्वतन्त्राः पयोमात्राहारयापितयौवनाः स्वाध्याययोगावाप्तज्ञानभक्तिमयजीवनाः परोपकारमात्रकार्याः शिवात्मानः श्रीमन्तो **रामेश्वर झा** महाभागा विश्वात्मभिरस्माभिर्भूयो भूयः सानन्तधन्यवादं प्रणम्यन्ते, यैर्हि प्रकृतपुस्तकप्रणयनेन समेषां सहृदयानां महानुपकारो विहितः।

प्रार्थ्यते चान्ते पूर्णं शिवं भासयन्ती विभावयन्ती च जगदीश्वरी शिवैव पुत्रवत्सला सानुनयं प्रतिपुत्रं पुस्तकस्यास्य प्रचारायेति हृदयं सहृदयानां सम्मुखं समुपस्थापयन्तो वयम्—

**श्री रुद्रधरझा शर्माणः**
न्यायवेदान्तव्याकरणाचार्याः
काशीहिन्दूविश्वविद्यालयीय-दर्शनविभागप्राध्यापकाः

# शुद्धिपत्रम्

| पृष्ठ | श्लोक | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | २७ | प्रिथे | प्रिये |
| १२ | ९० | सर्वार्थानु- | सर्वाण्यनु- |
| २४ | १९९ | -ष्ठ्व् | -ष्टुव् |
| ३१ | २४६ | वेत्ययम् | वेत्त्ययम् |
| ४६ | ३६३ | भासमन्न- | भासयन्न- |
| ५७ | ४५७ | यद्यङ्कुरं | यद्यङ्कुरं |
| ५८ | ४६९ | स्वमहंसं- | स्वमहंसं- |
| ६० | ४८६ | -दिर्वैतृ- | -दिर्वैत्तृ- |
| ६६ | ५३९ | वायवो | वायवी |
| ६७ | ५४२-५४४ | -द्धा- | -दूघा- |
| ६८ | ५५४ | तुयविस्था | तुर्यावस्था |
| ६९ | ५६४ | अगमे- | आगमे- |
| ७१ | ५७८ | -ध्वं | -ध्वं |
| ७२ | ५९० | नामाभ्यां | नामभ्यां |
| ७३ | ५९९ | -प्रवृत- | -प्रवृत्त- |
| " | ६०१ | समता- | समना- |
| ७४ | ६११ | -ध्वं | -ध्वं |
| ७५ | ६१८ | व्याच्य- | वाच्य |

( प्रक्रियाविमर्शने )

| | | | |
|---|---|---|---|
| ६ | ४३ | प्रमेयतां | प्रमेयता |
| १३ | १०७ | मालनी- | मालिनी- |

| पृष्ठ | श्लोक | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १४ | ११९ | सर्वत्मना | सर्वात्मना |
| १९ | ११८ | स्वभावत्त्वात् | स्वभावत्वात् |
| २७ | २२१ | -त्रिशत्तमः | -त्रिंशत्तमः |
| ३१ | २९८ | -निमज्ञनम् | -निमज्जवम् |
| ३३ | २७९ | तत्वानां | तत्त्वानां |
| ३६ | २९६ | बोध- | वोद्ध- |
| ३७ | ३१३ | -ग्राहकक- | ग्राहक- |
| ४३ | ३६२ | -यीगिनोः | -योगिनोः |
| ४६ | ३८७ | तत्त्वौघे | तत्त्वौघे |
| ४८ | ४०९ | -कर्तुत्व- | -कर्तृत्व- |
| ४९ | ४१० | -रुप- | -रूप- |
| ,, | ४१९ | अहो | अहो |
| ५० | ४२३ | वात | व्रात |
| ५१ | ४३३ | कतृता- | कर्तृता- |
| ५२ | ४३६ | पुग्दलान् | पुद्गलान् |
| ५४ | ४५३ | मलादोनाञ्च | मलादीनाञ्च |
| ५६ | ४७० | -वोद्धगतं | -वोद्गतं |
| ,, | ४७६ | -करणम् | -कारणम् |
| ५८ | ४८९ | कर्मोऽपि | कार्मोऽपि |
| ६३ | ५३२ | धर्मो | धर्मा |
| ६३ | ५३३ | -तत्त्वं | -तत्वं |
| ६५ | ५५० | त्रमः | भ्रमः |
| ७१ | १९८ | राधवः | राघवः |